# पाणिनीयाष्टाध्याय्यां षत्वविधायकसूत्राणां बाध्यबाधकभावचिन्तनम्

डॉ. शिवरामरामकृष्णभट्टः



कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः
रामटेकम्–441106, जि. नागपुरम्

**शीर्षकम्**
**पाणिनीयाष्टाध्याय्यां षत्वविधायकसूत्राणां बाध्यबाधकभावचिन्तनम्**
(Research work produced with the Research grant from Kavikulaguru Kalidas Sanskrit University)

**ग्रंथकर्ता**
**डॉ. शिवरामभट्टः**
सहायकप्राध्यापकः, साहित्यविभागः, क.का.सं.वि., रामटेकम्

**प्रधानसम्पादकः**
**प्रा. श्रीनिवास वरखेडी**
मा. कुलगुरुः, क.का.सं.वि., रामटेकम्

**सम्पादकः**
**प्रा. मधुसूदन पेन्ना,**
निदेशकः, संशोधनं प्रकाशनञ्च



**प्रकाशकः**
**कुलसचिवः,**
कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः, रामटेकम् – 44110

प्रकाशन वर्षम् – 2018

**आवृत्तिः** – प्रथमा

ISBN – 978–93–85710–14–8
(E-book as well as printed)

**मूल्यम्** –

**मुद्रापकः**
अवधूत ग्रॉफिक्स ॲण्ड प्रिन्टींग,
रामदासपेठ, नागपूर

**प्रतिज्ञापनपत्रम्**

ग्रन्थेऽस्मिन् वर्णिताः विचाराः पूर्णांशेन लेखकरूपेण मदीया वर्तन्ते । कविकुलगुरु–कालिदास–संस्कृत– विश्वविद्यालयस्य प्रशासनेन सह तेषां कोऽपि सम्बन्धः नास्ति इति अहं लेखकरूपेण अत्र प्रतिजानामि स्वीकरोमि च।

**लेखकः**
**डॉ. शिवरामभट्टः**
सहायकप्राध्यापकः

# कुलगुरुवाचः

संशोधनं कस्यापि विश्वविद्यालयस्य प्रगतिमूलत्वेन परिगण्यते । नवसंशोधनद्वारा समाजोपयोगि–संशोधनकर्मणि विश्वविद्यालयाः सदा प्रवृत्ताः भवन्तु तथा राष्ट्रनिर्माणे समाजहिते च पुरोगतिर्भवतु इति धिया कविकुलगुरु कालिदास संस्कृतविश्वविद्यालयद्वारा संशोधनक्षेत्रे नवाः उपक्रमाः आरब्धाः। छात्रेषु संशोधनस्य गुणवत्तां वर्धयितुं छात्रवृत्तिरारब्धा । अध्यापकेषु संशोधनप्रवृत्तिवर्धनार्थं लघुशोधप्रकल्पानां कृते विश्वविद्यालयेन आर्थिकानुदानस्य एष प्रकल्पः पूर्वकुलगुरोः आचार्य उमा वैद्यायाः काले समारब्धः।

एतेनार्थिकानुदानेन प्राध्यापकैः कृतस्य लघुसंशोधनस्य फलरूपेण ग्रन्थाः पञ्च सिद्धा जाताः ।अधुना ते विश्वविद्यालयद्वारा प्रकाश्यन्त इति अत्यन्तं मोदावहो विषयः । तत्रान्यतमोऽयं ''पाणिनीयाष्टाध्याय्यां षत्वविधायकसूत्राणां बाध्यबाधकभावचिन्तनम्'' नामकः ग्रन्थः डॉ. शिवरामभट्टः इत्यनेन प्रणीतः। एतदर्थमहम् एतां संशोधक– प्राध्यापकं भृशम् अभिनन्दामि ।

एतादृशेन संशोधनेन नूनमेव शोधक्षेत्रे विश्वविद्यालयस्य गणनीयं स्थानं भविष्यतीति मे विश्वासः। इतः प्राप्तप्रेरणा अन्ये च संशोधने प्रवर्तेरन् इति अपि आशासे ।

भवदीयः

दि. 09.01.2019 **आचार्यः श्रीनिवासः वरखेडी**

कुलगुरुः

# प्रास्ताविकं किंचित्

पाणिनीयव्याकरणे शब्दव्युत्पत्तिप्रक्रियामाधृत्य बहवो विषया न्यरूपिषत। तत्र णत्वषत्वादय आदेशाः अन्यतमाः। प्रकृतग्रन्थः षत्वविषयमाधारीकृत्य प्रावर्ति। लौकिकव्यवहारे बहुत्र षत्वप्रयोगे सन्देहो भवति। यथा– परिस्थितिः उत परिष्ठितिः इति सन्देहो भवति । एतादृशसन्देहानां निवारणाय कश्चन प्रयासो विधीयेतेति धिया ग्रन्थोऽयमग्रन्थि। अष्टाध्याय्यां त्रिषु स्थलेषु षत्वविधायकसूत्रणां प्रसङ्गो दृश्यते। अष्टमाध्यायस्य द्वितीयपादे व्रश्चभ्रस्जेति, अष्टमाध्यायस्य तृतीयपादे इणः षः इत्यधिकारे तथा च तत्रैव अपदान्तस्य मूर्धन्यः इत्यधिकारे प्रतिपादितानां षत्वविधायकसूत्रणां परस्परबाध्यबाधकभावचिन्तनं विभिन्नग्रन्थानां व्याख्यानां च कूलंकषाध्ययनेन व्यधायि। अतः षत्वविषयमधिजिगांसमानानां व्याकरणज्ञानपिपासूनां कृते सहायको भवेदित्याशासे।

इत्थं विद्वद्विधेयः

**डॉ. शिवरामभट्टः**

# कृतज्ञतानिवेदनम्

भगवतः श्रीरामचन्द्रस्य चरणकमलतले विराजमाने महाकविना कालिदासेन परिकीर्तिते रामटेकाख्ये उपमण्डले कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः प्राचीनाधुनिकज्ञानविज्ञानसंपदस्सुगन्धं प्रसारयन् नवीनशैक्षणिकोपक्रमैः स्वकीर्तिं देशे विदेशे च व्यापयन् दरीदृश्यते । एतादृशविद्यापीठस्य वेदव्याकरणविभागे गतेभ्यः नवभ्यः वर्षेभ्यः सहायकप्राध्यापकत्वेन कार्यं कुर्वाणाय मह्यं विश्वविद्यालयद्वारा ग्रन्थस्यास्य ईप्रकाशनकर्मणि अनुमतिं प्रदत्तवद्भ्यः माननीयेभ्यः **कुलगुरुभ्यः आचार्येभ्यः श्रीनिवासवरखेडीमहोदयेभ्यः** हार्दान् धन्यवादान् वितनोमि।

एवं ग्रन्थलेखनकर्मणि मां प्रेरितवद्भ्यः प्रकाशनविभागाध्यक्षेभ्यः **आचार्येभ्यः पेन्नामधुसूदनमहोदयेभ्यः** हार्दान् धन्यवादान् प्रकटीकरोमि।

तथा च ग्रन्थप्रकाशनप्रक्रियायां समये समये मामुपकृतवद्भ्यः **आचार्येभ्यः सी.जी. विजयकुमारमहोदयेभ्यः** हार्दान् धन्यवादान् वितनोमि।

एवं प्रत्यक्षाप्रत्यक्षरूपेण साहाय्यमाचरितवद्भ्यः सर्वेभ्योऽपि हार्दान् धन्यवादान् आविष्करोमि। ग्रन्थस्य बाह्यसौन्दर्यीकरणे साहाय्यमाचरितवते उमेशपाटीलाय धन्यवादाः।

**डॉ. शिवरामभट्टः**

# विषयानुक्रमणिका

# पाणिनीयाष्टाध्याय्यां षत्वविधायकसूत्राणां बाध्यबाधकभावचिन्तनम्

**व्याकरणम् –**

भाषाव्यवहारनियमनाय भाषासौष्ठवसम्पादनाय भाषाप्रयोगनियमबोधनाय च सर्वासु भाषास्वपि किञ्चिद् व्याकरणं वर्तत एव। व्याकरणेन विनापि बालकः गेहे पितृभ्यां परिवारजनेभ्यः मित्रेभ्यः वा भाषामभ्यस्यति भाषाशिक्षणं च प्राप्नोति। अतो लोकाश्रयत्वात् भाषा सामाजिकसन्दर्भे लोकाधीना भवति। भाषा तत एवाविर्भवति मनुष्यस्य। एवं हि अवलोक्यते लोके निरक्षरा व्याकरणमजानन्तोऽपि वाग्मिनो भवन्ति। व्यवहारे च कुशला भवन्ति। अतः किमस्य व्याकरणस्य प्रयोजनमिति न ब्रूयुः। व्याकरणस्य भूयो महत्त्वन्तु अस्त्येव। भाषायां कौशलसम्पादनाय प्रयोगवैशिष्ट्याय प्रयोगगाम्भीर्यावगमनाय वाङ्मयविशालतासम्पादनाय च व्याकरणमत्यावश्यकमनिवार्यं च बोभूयते। तदीयभाषायाः वाक्यरचनाशैली प्रयोगकरणशैली च व्याकरणमाधृत्यैव भवति। अतो भाषाशिक्षणे भाषाप्रौढतायै व्याकरणस्य महत्त्वं प्रत्यक्षमनुभवसिद्धं च। अतो महाभाष्येऽपि "वेदान्नो वैदिकाः शब्दाः सिद्धाः लोकाच्च लौकिकाः अनर्थकं व्याकरणम्" इति वावद्यमानेभ्यः विप्रतिपन्नबुद्धिभ्यः सुहृद्भूत्वा आचार्यः इदं व्याकरणशास्त्राम् अन्वाचष्टे इति व्यलेखि। रक्षोहागमादीन्यस्य प्रयोजनानि सन्तीत्यध्येयं व्याकरणं नास्तीदं व्यर्थमिति भावः। नानाभाषासु नानाव्याकरणानि सन्ति चेदपि सांप्रतं संस्कृतव्याकरणस्य परिचय ईषद् विधास्यते।

**संस्कृतव्याकरणम् –**

वेदोऽखिलो धर्ममूलमिति समस्तस्य धर्मस्य मूलं वेदा एव। स्पष्टतया वेदावगमनायैव शिक्षादीनि षडङ्गानि प्रावर्तिषत। यथा –

**शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा।**
**कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः।।**[1] इति।

तेषु षडङ्गेषु मध्ये मुखं व्याकरणं स्मृतम् इति व्याकरणस्य वेदमुखत्वं सर्वैरपि अङ्गीक्रियते। व्याकरणमन्तरा लोके वेदे च भाषादक्षतासम्पादनं मन्त्राणां यथार्थबोधो दुष्कर एव। शुद्धभाषा साधुतया मानवचिन्तनं परिप्रकाशयति। भाषाशुद्धतायै व्याकरणं विना नाऽन्यः पन्था विद्यते। वाङ्मलानां चिकित्सितं भवति व्याकरणम्। तदेव भर्तृहरिः वाक्यपदीये न्यगादीत्। यथा–

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्। पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**[2] इति।

तर्हिं किं नाम व्याकरणम्? तस्य कः पदार्थः? इति जिज्ञासायां प्रतिपाद्यते यत् –

व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृतिप्रत्ययतदर्थनिर्देशपुरस्सरं व्याख्यायन्ते अनेन शब्दाः इति व्युत्पत्त्या वि आङ् इत्युपसर्गद्वयपूर्वकात् डु कृञ् करणे इत्यर्थकाद्धातोः करणाधिकरणयोश्च (पा.सू.3–3–117) इति

सूत्रेण करणार्थे ल्युट्प्रत्यये अनादेशे विभक्तिकार्ये व्याकरणमिति रूपं सिध्यति।

तैत्तरीयसंहितायाम् इन्द्र एव सर्वप्रथमः प्रकृतिप्रत्ययविश्लेषकः इत्युक्तम्।

यथा – **वाग् वै पराच्य व्याकृतावदत्। ते देवा इन्द्रमब्रुवन्। इमां नो वाचं व्याकुर्विति। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्।**[3] एवं च व्याक्रियन्ते विविच्य कथ्यन्ते साधुशब्दाः असाधुशब्देभ्य इत्यनेन शब्दसाधुत्वविवेचकशास्त्रं भवति व्याकरणम्। महाभाष्ये पतञ्जलिः लक्ष्यलक्षणसमुदितं सूत्रं वा व्याकरणमिति व्याचख्यौ। तथा च व्याकरणं, सूत्रं, लक्षणं, शब्दानुशासनं, पदशास्त्रम् इत्यादयोऽस्य पर्यायशब्दाः। भर्तृहरिरपि स्वकीये वाक्यपदीयेऽर्थानां तत्त्वावगमनं व्याकरणाधीनमिति व्याख्यत्। यथा –

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**[4] इति

एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति इति अर्थवादवाक्येन साधुशब्दज्ञानोपयोगितया व्याकरणस्मृतेः मन्वादीनां स्मृतीनामिव प्रामाण्यं सिध्यति। साधुभिर्भाषितव्यं नासाधुभिः, नानृतं वदेत् इत्यादिविधिनिषेधपराणि वचनानि साधुशब्दज्ञानात् धर्माख्यं प्रयोजनं प्रतिपादयन्ति। तदेवोक्तं वररुचिना यत् –

**सिद्ध शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः**[5] इति।

लोके साधूनामसाधूनां च शब्दानां प्रयोगेऽर्थावबोधः जायत एव। तथापि

अपशब्दप्रयोगे प्रयोक्त्रभिमतोऽर्थः स्पष्टं न प्रतीयेत। अर्थान्तरं च भासेत। धर्मप्राप्तिश्च न स्यात्। यथा भणितमभियुक्तैः –

**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत्।।** इति।

शब्दशास्त्रमविज्ञाय सभायां वाक्चातुर्यप्रदर्शनं दुःसाहसमेव। अधीतव्याकरण एव शब्दैः सह निभृतं क्रीडितुं शक्नोति येन स परां सिद्धिमवाप्नोतीति साधुशब्दज्ञानमेव व्याकरणस्य मुख्यं प्रयोजनं बोभवीति। प्रोक्तं च सुभाषितरत्नभाण्डागारे यत् –

**शब्दशास्त्रामनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे।**
**बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना।।** इति।

एवं च व्याकरणं विना लोके व्यवहारः ऊहितुमप्यशक्यः। भाषादक्षताप्रतिष्ठापनं शब्दशास्त्रेणैव चेक्रीयते नान्येन। अतो व्याकरणमनादिनिधनमनवरतं लोकोपकारकं बोभवीतीत्यत्र नास्ति संशयलेशः। व्याकरणत्वं नाम अर्थविशिष्टशब्दनिष्ठपुण्यजनकता– वच्छेदकसाधुत्वजातिविशेषव्यञ्जकत्वम् इति भावः। एतादृशं व्याकरणम् अष्टधा नवधा वा वर्तते इति विदुषामभिमतम् । तद्यथा . श्रीतत्त्वधिनामके वैष्णवग्रन्थे नव व्याकरणानि प्रादर्शिषत यत्–

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।** इति।

अष्टौ व्याकरणानि व्यलेखिषत। यथा –

**इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा इत्यष्टावादिशाब्दिकाः।।** इति।

**पाणिनीयव्याकरणं तद्वैशिष्ट्यं च –**

सत्स्वपि ऐन्द्रचान्द्रादिव्याकरणेषु पाणिनीयं व्याकरणमर्थविशेषनिर्देशपुरस्सरं प्रकृतिप्रत्ययविभागद्वारा अन्वाख्याततत्वादन्येभ्यो विशिनष्टि। पाराशरपुराणेऽपि अस्य शास्त्रस्य महती श्लाघा दरीदृश्यते। यथा –

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**
**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन।।** इति।

अस्य च पाणिनीयस्य व्याकरणस्य नामान्तरं विद्यते त्रिमुनि व्याकरणम् इति। इदं च शास्त्रं पाणिनिकात्यायनपतञ्जलिभिः त्रिभिः मुनिभिः प्रणीतत्वात् तन्नाम सार्थकं युक्ततमम्।

**पाणिनिः –**

त्रिमुनिव्याकरणस्याद्यः प्रवर्तकः भगवान् पाणिनिः। असावाचार्यः महेश्वरादनुग्रहं प्राप्य शास्त्रमिदं सूत्ररूपेण न्यबध्नात्। तदेव शोश्रूयते पाणिनीयशिक्षायाम्। यथा –

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।**[6] इति।

"सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः" इति महाभाष्यवचनेन पाणिनेः मातुः नाम दाक्षीति वक्तुं शक्यते। अस्य मुनेः नामान्तराणि श्रूयन्ते वैजयन्तीकोशे। यथा–शालातुरीयकः, दाक्षीपुत्रः, पाणिराहिकः इति। अयमाचार्यः व्याकरणशास्त्रं सूत्ररूपेण समकल्पयत्। सूत्रान्नाम–

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।।**[7] इति।

उक्तलक्षणोपेतानि उपचतुस्सहस्रं सूत्राणि भगवता पाणिनिना स्वकीये अष्टाध्यायीनामके ग्रन्थे प्राणायिषत। अस्य कालः प्रायशः ई.पू.700 इति सर्वैरङ्गीक्रियते।

**अष्टाध्यायी –**

पाणिनीयव्याकरणे भगवान् पाणिनिः अष्टाध्यायीनामकग्रन्थे स्वकीये सूत्राणि निबबन्ध। अष्टाध्याय्याः विभागः अष्टसु अध्यायेषु प्रत्येकमध्याये पादचतुष्टयेनाहत्य प्रायः 3994 सूत्रयुक्तः वर्तते। तत्रा च षोढा विभक्तानि सूत्राणि सन्ति। यथा –

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।।** इति।

सूत्राणामुपरि कात्यायनेन वार्तिकानि व्यरचिषत। सूत्रवार्तिकयोः उपरि महामुनिना पतञ्जलिना महाभाष्यं व्यरचि। इदमेव पाणिनीयं त्रिमुनि व्याकरणमिति सर्वत्र पाप्रथ्यते।

**वररुचिः** –

पाणिनिप्रोक्तसूत्राणां व्याख्यानग्रन्थः भवति वार्तिकग्रन्थः। तानि वार्तिकानि कात्यायनापरनामधेयेन वररुचिना अग्रन्थिषत। भगवतः पाणिनेरनन्तरपरम्परायां शोभमानोऽयमाचार्यः सूत्राणां वार्तिकानि रचयामास। वार्तिकन्नाम–

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः।।** इति।

तत्र तत्र सूत्रेषु उक्तानामनुक्तानां दुरुक्तानां च विषयाणां पुनः विचारणपूर्वकं व्याख्यानं वार्तिकमिति कथ्यते। अस्य कालः प्रायशः ई.पू. 400 इति बहूनां पण्डितानामभिमतम्।

**पतञ्जलिः** –

वैयाकरणपरम्परायां शेषावतारत्वेन प्रसिद्धः महाभाष्यकारः भवति पतञ्जलिः। असौ हि मुनिः प्रमाणं त्रिमुनिव्याकरणे समस्तस्यापि विषयस्य। तदेव निगद्यते– यथोत्तरं मुनीनां प्रामाण्यम् इति। पातञ्जलं महाभाष्यं न केवलमस्मिन् शास्त्रेऽपि तु शास्त्रान्तरेऽपि प्रमाणत्वेन गण्यते। महर्षेश्चास्य नामान्तराणि इत्थं वर्तन्ते। यथा – गोनर्दीयः, गोणिकापुत्राः, नागनाथः, फणी, फणिभृत्, शेषः, शेषावतारः, अहिपतिः, इत्यादि। गोणिकापुत्रः इति नाम्ना अस्य माता गोणिकेति ज्ञायते। अस्य कालः प्रायशः ई.पू. 150 इति मन्यते।

**महाभाष्यम्** –

महत्त्वात् भाष्यवत्त्वाच्च महाभाष्यमितीर्यते। महर्षिः पतञ्जलिः सूत्राणां वार्तिकानां चोपरि प्रश्नोत्तररूपेण व्याख्यानमकृत स्वकीये महाभाष्ये। तथैव स्वसिद्धान्तानपि प्रातिष्ठिपत्। अतः एतल्लक्षणमत्र सङ्गच्छते। तद्यथा–

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।** इति।

भाष्यस्य महत्त्वकथनायैव लोके इदमाभाणकं शोश्रूयते। यथा – "महाभाष्यं वा पाठनीयं महाराज्यं वा पालनीयम्" इति। एवं च त्रिभिः मुनिभिः प्रतिपादितत्वात् अस्य व्याकरणस्यैव त्रिमुनि व्याकरणम् इति प्रसिद्धिः वरीवर्ति।

**भट्टोजिदीक्षितः** –

वैयाकरणपरम्परायां प्रथितयशास्सुगृहीतनामायं श्रीमान् भट्टोजिदीक्षितः ऋग्वेदान्तर्गताश्वलायनसूत्रशाकलशाखाध्यायी भट्टकुलावतंसः श्रीमल्लक्ष्मीधरपण्डितवरसूनुः श्रीमच्छेषकृष्णाभिधगुरोश्चरणानुराधनशास्त्रवैदुषीविभूषितः दरीदृश्यते।

अयं शास्त्रतपस्वी महाराष्ट्रब्राह्मण इति बहवः सारस्वतब्राह्मण इति च केचन कथयन्ति।

गुरुः–भट्टोजिदीक्षितः प्रक्रियाप्रकाशकारेण शेषकृष्णेन व्याकरणमध्यापित इति स्वयं शब्दकौस्तुभे कथयति यत् 'तदेतत् सकलमभिसंधाय प्रक्रियाप्रकाशे गुरुचरणैरुक्तम्' इति। कालः– 1581 क्रिस्तशकतः 1626 पर्यन्तं केळदिसम्राज्याधिपस्य वेङ्कटप्पनायकस्य आस्थानमागमदिति रामानुजशृङ्गिनामकं पण्डितं वाग्वादे पराजयतेति केळदिनृपविजये महाकाव्ये उदलेखि।

कृतयः–1.वैयाकरणसिद्धान्तकौमुदी 2.शब्दकौस्तुभः 3.प्रौढमनोरमा 4. वैयाकरणसिद्धान्तकारिका 5.तत्त्वकौस्तुभम् 6.सन्ध्याभाष्यम् 7.गोत्रप्रवरनिर्णयः

**वैयाकरणसिद्धान्तकौमुदी** –

भट्टोजिदीक्षितस्य कृतिषु मुख्या कृतिरियं वर्तते। भरतखण्डे सर्वत्र सुविख्यातो ग्रन्थो वर्ततेऽयम्। प्रक्रियाक्रममनुसरन्तीयं सवृत्ति सोदाहरणम् अष्टाध्यायीस्थसूत्राणां व्याख्यां विदधाति। संज्ञापरिभाषासन्धिषड्लिङ्गाव्ययकारक– समासतद्धिततिङन्तकृदन्तवैदिकप्रकरणैः ग्रन्थोऽयं विराजते। उणादिसूत्राणि लिङ्गानुशासनसूत्राणि च सवृत्ति व्यलिखत् भट्टोजिदीक्षितः।

**प्रौढमनोरमा** –

ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः। सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम्।। अयं ग्रन्थः वैयाकरणसिद्धान्तकौमुद्याः व्याख्याग्रन्थो वर्तते। भट्टोजिदीक्षितेन लिखितो वर्तते।

**लघुशब्देन्दुशेखरः** –

नागेशभट्टेन वैयाकरणसिद्धान्तकौमुद्याः व्याख्याग्रन्थो बृहच्छब्देन्दुशेखरो वर्तते। ततः तस्य संक्षिप्तः व्यख्याग्रन्थो लघुशब्देन्दुशेखरः लिखितः।

**प्रदीपः** –

अयं महाभाष्यव्याख्याग्रन्थो वर्तते कैयटेन लिखितः। अयं सत्यमेव भाष्यमर्मज्ञानाय सम्प्रति समुपलब्धो ग्रन्थो वर्तते। अस्यानेकैरनेका व्याख्या व्यलेखिषत।

**उद्योतः** –

नागेशभट्टेन महाभाष्यप्रदीपोद्योतो नाम महाभष्यव्याख्याग्रन्थो व्यरचि। भाष्यस्य प्रदीपस्य च मर्मज्ञानाय नितरामुपकारोति अयं ग्रन्थः।

**काशिका** –

जयादित्यस्य वामनस्य च रचना काशिकावृत्तिः पाणिनीयसूत्रवृत्तिषु केन्द्रस्थानीया वर्तते। अष्टाध्यायीसूत्रक्रममनुसृत्य व्यख्या कृता वर्तते। एषा पाणिनीयशब्दानुशासनस्य प्राच्यपाठमनुसरति।

**व्याकरणसिद्धान्तसुधानिधिः –**

लक्ष्मीधरसूनुना विश्वेश्वरसूरिणा व्याकरणसिद्धान्तसुधानिधिनामको ग्रन्थो व्यलेखि। अयम् अष्टाध्यायीविवरणात्मको ग्रन्थो वर्तते। अयं च सम्प्रति चतुर्थाध्यायस्य प्रथमपादसमाप्ति–पर्यन्तमेवोपलभ्यते।

**ग्रन्थस्य उद्देश्यम्–**

1. व्याकरणस्य षत्वविधायकानां विविधग्रन्थानां कूलंकषतया समग्रमध्ययनम्।
2. व्याकरणस्य षत्वविधायकानां विविधव्याख्यानां कूलंकषतया समग्रमध्ययनम्।
3. व्याकरणस्य षत्वविधायकानां सूत्राणां संशोधनदृष्ट्या समग्रमध्ययनम्।
4. विविधग्रन्थेषु षत्वसम्बद्धानां विशिष्टप्रयोगाणां कूलंकषमध्ययनम्।
5. व्यावहारिकदृष्ट्या साम्प्रतमुपयुक्तानां शब्दानां प्रकटनम्।
6. षत्वविधायकानां सूत्राणामध्ययनेन शब्दव्युत्पत्तिसामर्थ्यवर्धनम्।
7. व्यवहारे संस्कृतवाक्यरचनावसरे विशिष्टप्रयोगाणां योजने सहायताप्रदानम्।
8. व्याकरणस्य षत्वविधायकानां सूत्राणां बाध्यबाधकभावचिन्तनम्।

***<u>सन्दर्भसूची</u>***


1. अमरकोशः– 1/6/182
2. वाक्यपदीयम्–ब्रह्मकाण्डम्, श्लोकसंख्या–14
3. तैत्तिरीयसंहिता – 6/4/7
4. वाक्यपदीयम्–ब्रह्मकाण्डम्, श्लोकसंख्या–13
5. महाभष्यम्,पस्पशाह्निकम्
6. पाणिनीयशिक्षा–श्लोकसंख्या–57
7. वायुपुराणम्–49/142


........................

# व्रश्चभ्रस्जादिसूत्रचिन्तनम्

**षत्वविधायकसूत्राणि –**

पाणिनीयाष्टाध्याय्यां त्रिषु स्थलेषु षत्वविधायकसूत्राणि दृश्यन्ते। अष्टामाध्यायस्य द्वितीयपादे षट्त्रिंशत्तमं सूत्रं व्रश्चभ्रस्जेति षत्वविधायकम्। एवमष्टमाध्यायस्य तृतीयपादे इणः षः (8–3–39) इति अधिकारे प्रोक्तानि इदुदुपधस्य चाप्रत्ययस्य (8–3–41), द्विस्त्रिश्चतुरिति कृत्वोऽर्थे (8–3–43), इसुसोः सामर्थ्ये (8–3–44), नित्यं समासेऽनुत्तरपदस्थस्य (8–3–45), कस्कादिषु च (8–3–48) इति पञ्च सूत्राणि षत्वविधायकानि सन्ति।

तथा च अपदान्तस्य मूर्धन्यः (8–3–55), इत्यधिकारे नुम्विसर्जनीयशर्व्यवायेऽपि (8–3–57), आदेशप्रत्यययोः (8–3–59), शासिवासिघसीनां च (8–3–60), स्तौतिण्योरव षण्यभ्यासात् (8–3–61), प्राक्सितादड्व्यवायेऽपि (8–3–63), स्थादिष्वभ्यासेन चाभ्यासस्य (8–3–64), उपसर्गात्सुनोतिसुवति... (8–3–65), सदिरप्रतेः (8–3–66), स्तन्भेः (8–3–67), अवाच्चालम्बनाविदूर्ययोः (8–3–68), वेश्च स्वनो भोजने (8–3–69), परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् (8–3–70), सिवादीनां वाड्व्यवायेऽपि (8–3–71), अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु (8–3–72), वेः स्कन्देरनिष्ठायाम् (8–3–73), परेश्च (8–3–74), परिस्कन्दः प्राच्यभरतेषु (8–3–75), स्फुरतिस्फुलत्योर्निर्निविभ्यः (8–3–76), वेः स्कभ्नातेर्नित्यम् (8–3–77), समासेऽङ्गुलेः सङ्गः (8–3–80), भीरोः स्थानम् (8–3–81), अग्नेः स्तुत्स्तोमसोमाः (8–3–82), ज्योतिरायुषः स्तोमः (8–3–83), मातृपितृभ्यां स्वसा (8–3–84), मातुः पितुर्भ्यामन्यतरस्याम् (8–3–85), अभिनिसः स्तनः शब्दसंज्ञायाम् (8–3–86), उपसर्गप्रादुर्भ्यामस्तिर्यच्परः (8–3–87), सुविनिदुर्भ्यः सुपिसूतिसमाः (8–3–86), निनदीभ्यां स्नातेः कौशले (8–3–89), सूत्रं प्रतिष्णातम् (8–3–90), कपिष्ठलो गोत्रे (8–3–91), प्रष्ठोऽग्रगामिनी (8–3–92), वृक्षासनयोर्विष्टरः (8–3–93), छन्दोनाम्नि च (8–3–94), गवियुधिभ्यां स्थिरः (8–3–95), विकुशमिपरिभ्यः स्थलम् (8–3–96), अम्बाम्बगोभूमि... (8–3–97), सुषामादिषु च (8–3–98), एति संज्ञायामगात् (8–3–99), नक्षत्राद्वा (8–3–100), ह्रस्वात्तादौ तद्धिते (8–3–101), निसस्तपतावनासेवने (8–3–102), युष्मत्ततत्ततक्षुष्वन्तःपादम् (8–3–103), यजुष्येकेषाम् (8–3–104), स्तुतस्तोमयोश्छन्दसि (8–3–105), पूर्वपदात् (8–3–106), सुञः (8–3–107), सनोतेरनः (8–3–108), सहेः पृतनर्ताभ्यां च (8–3–109) इति एकोनपञ्चाशत् षत्वविधायकसूत्राणि सन्ति। षत्वनिषेधसूत्राणि न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् (8–3–110), सात्पदाद्योः (8–3–111), सिचो यङि (8–3–112), सेधतेर्गतौ (8–3–113), प्रतिस्तब्धनिस्तब्धौ (8–3–114), सोढः (8–3–115), स्तम्भुसिवुसहां चङि (8–3–116), सुनोतेः स्यसनोः (8–3–117), सदिष्वञ्जोः परस्य लिटि (8–3–118), निव्यभिभ्योऽड्व्यवाये वा छन्दसि (8–3–119) इति दश सूत्राणि षत्वनिषेधसूत्राणि सन्ति। एवं च व्रश्चभ्रस्जेत्यादिनियमेन विधीयमानं षत्वम्, अपदान्तस्य मूर्धन्यः इत्यधिकारे विधीयमानं षत्वम्, ष्टुना ष्टुः इति सूत्रेण विधीयमानं षत्वम्, इणः षः इत्यधिकारे विधीयमानं षत्वमिति प्राधान्येन चतुष्प्रकारकं षत्वम् अष्टाध्याय्याम् उपलभ्यते। तेषां सप्रमाणं निरूपणम् अग्रे करिष्यते।

**वैयाकरणसिद्धान्तकौमुदी –**

294. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः (8–3–36) – वैयाकरणसिद्धान्तकौमुद्याम् अजन्तस्त्रीलिङ्गप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे षट्षष्टितमं सूत्रमिदम्। वृत्तिः – व्रश्चादीनां सप्तानां छशान्तयोः च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डः। निड्भ्याम्।

व्याख्यानम् – वैयाकरणसिद्धान्तकौमुद्याम् अजन्तस्त्रीलिङ्गप्रकरणे आकारान्तनिशाशब्दस्य शसादौ विभक्तौ निशादेशपक्षे निश्+भ्याम् इत्यवस्थायामस्य सूत्रस्य प्रवृत्तिः। व्रश्च्, भ्रस्ज्, सृज्, मृज्, यज्, राज्, भ्राज् एतेषां धातूनामन्तिमवर्णस्य स्थाने तथा च छकारान्तशब्दानां शकारान्तशब्दानां च अन्तिमवर्णस्य स्थाने षकारादेशो भवति झलि पदान्ते च परे इति सूत्रस्य तात्पर्यम्। प्रकृते निश् इति शकारान्तशब्दः वर्तते। अग्रे भ्यामिति हलादिप्रत्ययो वर्तते। तेन कारणेन एतेन सूत्रेण निश् इति शकारस्य स्थाने षकारादेशे निड् भ्याम् इति स्थिते झलां जशोऽन्ते (8–3–39) इति सूत्रेण षकारस्य जशि डकारे निड्भ्यामिति रूपं सिध्यति।

व्रश्च्–व्रष्टा, भ्रस्ज्–□भ्रष्टः, सृज्–स्रष्टा, मृज्–मार्ष्टि, यज्–इष्टिः, राज्–राष्ट्रम्, भ्राज्–भ्राष्ट्रा, छ्–पृष्टम्, श्–दष्ट इति अन्यानि उदाहरणानि।

**बालमनोरमा –**

निश् भ्याम् इति स्थिते – व्रश्च□भ्रस्ज। व्रश्चादयः सप्त धातवः, छशौ वर्णौ, ताभ्यां शब्दरूपविशेष्यमादाय तदन्तविधिः। झलो झलि इत्यतो झलीत्यनुवर्तते। पदस्य इत्यधिकृतम्। स्कोः सयोगाद्योरन्ते च इत्यतः अन्ते इत्यनुवर्तते। तदाह–व्रश्चादीनामिति। अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम्। षस्य जश्त्वेन ड इति। प्रकृतसूत्रेण शस्य षत्वे तस्य षकारस्य 'स्वादिषु... इति पदत्वात् 'झलां जशोऽन्ते' इति जश्त्वेन स्थानसाम्याड्डकारे निड्भ्यामित्यादि रूपमित्यर्थः।

**अयं भावः** – प्रकृतसूत्रव्याख्याने अनुवृत्तिविषये कथितम्। पदमध्ये पदान्तत्वाभावे अपि स्वादिष्विति सूत्रेण पदत्वेन जस्य षत्वं भवति।

**लघुशब्देन्दुशेखरः –**

व्रश्च। अत्र राजिसाहचर्याद्□भ्राजिः फणादिरेव। तेनास्य बिभ्रागित्येवेत्याहुः। छशौ वर्णौ, ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह–छशान्तयोरिति। छशयोरित्युक्तेऽपि न क्षतिरिति चिन्त्यम्। पदस्येति तु पृष्टमित्यादिसिद्धये व्यधिकरणमेव। अन्तादेश इति। अलोऽन्त्यस्येति वचनात्। अत्र झलो झलीत्यतो झलीति, पदस्येति स्कोरित्यतोऽन्ते इति चानुवर्तते। च्छ्वोः शूड् इत्यत्र क्ङितीत्यनुवृत्तेः प्रष्टेत्यादौ शादेशाभावादशान्तत्वेन षत्वाप्राप्तौ छग्रहणम्। अत्रापि सतुङ्निर्देशो बोध्यः। तस्यासिद्धत्वादिति। चयो द्वितीयेत्यस्य नादिन्येति सूत्रे भाष्ये पाठादिति भावः। टतयोरिति। घुडभावे टस्य धुटि तस्येत्यर्थः । न भवतीति। जश्त्वात् प्राक् षस्य नेत्यर्थः। जश्त्वे तु प्राप्तिरेव नेति बोध्यम्। केचित्त्विति। एकाच इत्युत्तरसूत्रेऽनुवृत्त्या मध्येऽपि सम्बन्ध एवोचित इति भावः। जश्त्वेनेति। यत्तु जश् झशीति निर्देशात् शस्य न जश्त्वमिति, तन्न। अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च

तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात् उपदेशेऽजित्यादिनिर्देशैः कुत्वाद्यनापत्तेश्च। अत्र मते भाष्यानुग्रहो विचार्यः। मांसपृतनेत्यस्य पद्दन्.. इति सूत्रे उपसंख्यातत्वादाह–शसादौ वेति। स्त्रीत्वादिति। पुंस्त्वाभावादित्यर्थः। नात्वं नेति। स्त्रीत्वादित्यनुकृष्यते। अत एव पुंस्त्वाभावान्नात्वाभाव इति नोक्तम्। न हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः नपुंसकेऽपि तदङ्गीकारात्।

**अयं भावः** – सूत्रे छशौ वर्णपरौ। विशेष्यस्याभावे शब्दस्वरूपं विशेष्यम् आदाय तदन्तविधिः कर्तव्यः। मूले छशयोरिति चिन्त्यम्। तुगागमसहितस्य छस्य षादेश इत्यर्थः। तेन पृष्टम् इत्यादौ च्छ्वोः शूडिति सूत्रेण सतुकः छस्य शत्वे सिद्धेपि प्रष्टा इत्यादौ च्छस्य षत्वं न स्यात्। अतः प्रकृतसूत्रेऽपि सतुको निर्देश कर्तव्य इति।

**काशिकावृत्तिः** –

व्रश्च, भ्रस्ज, सृज, मृज, यज, राज, भ्राज–इत्येतेषां छकारान्तानां शकारान्तानां च षकार आदेशो भवति झलि परतः पदान्ते च। व्रश्च–व्रष्टा, व्रष्टुम्, व्रष्टव्यम्, मूलवृट्, भ्रस्ज–भ्रष्टा, भ्रष्टुम्, भ्रष्टव्यम्, धानाभृट्, सृज–स्रष्टा, स्रष्टुम्, स्रष्टव्यम्, रज्जुसृट्, मृज–मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्, कंसपरिमृट्, यज–यष्टा, यष्टुम्, यष्टव्यम्, उपयट्, राज–सम्राट्, स्वराट्, विराट्, भ्राज–बिभ्राट्। राजभ्राजोः पदान्तार्थं ग्रहणम्। झलादिराभ्यामिटा पर्यवपद्यते। केचित्तु राष्टिः भ्राष्टिरिति क्तिन्नन्तमिच्छन्ति। छकारान्तानाम् – प्रच्छ – प्रष्टा, प्रष्टुम्, प्रष्टव्यम्, शब्दप्राट्। च्छ्वोः शूडनुनासिके च (6–4–14) इत्यत्र क्ङिति इत्यनुवर्तते। इति छग्रहणमिह क्रियते। शकारान्तानाम् – लिश् – लेष्टा, लेष्टुम्, लेष्टव्यम्। लिट्, विश्–वेष्टा, वेष्टुम्, वेष्टव्यम्, विट्।

**अयं भावः** – सूत्रे विद्यमानस्य प्रत्येकं दलस्य उदाहरणानि प्रस्तुतानि। राजभ्राजोः पदान्ते एव षत्वं भ्रवितुं शक्यते। यतः सर्वत्र इडागमस्य सत्त्वात् झल्परकत्वाभावात् झलि परे षत्वं नास्त्येव इति। परन्तु केचन सुधियः झलि परे राष्टिः, भ्राष्टिः इति क्तिन्नन्तं रूपमिच्छन्ति। तितुत्रथसिसुरकसेसु च इति इटो निषेधात् झल्परकत्वं लभ्यत इति। पुनश्च च्छ्वोः शूडित्यनेन सिद्धे शत्वे तस्य षत्वे रूपे सिद्धे छग्रहणं प्रष्टा इत्यादि– सिद्धये कृतमस्ति।

**व्याकरणसिद्धान्तसुधानिधिः** –

ओ व्रश्चू छेदने। भ्रस्ज पाके। भ्रस्जो इति पाठस्तु निर्मूलः। भृष्टः, भृष्टवानित्यत्र ओदितश्चेति निष्ठानत्वप्रसङ्गात्। सृज विसर्गे। मृजूष् शुद्धौ। यज देवपूजादौ। राजृभ्राजृ दीप्तौ। छशयोः सम्बन्धिविशेषानुपादानात् सामान्यग्रहणम्। व्रश्चादीनां छशयोश्च षत्वं स्याज्झलि पदान्ते च। व्रश्चति। अव्रक्ष्यत्। व्रष्टा। वृट्/ वृड्। सकारोपधोयम्। अन्यथा चस्य संयोगान्तलोपे शकारग्रहणेनैव गतार्थत्वात् पृथगुपादानानुपपत्तेः। न च... मित्यादौ संयोगान्तलोपानुपपत्त्या तदर्थं तदिति वाच्यम्; वृक्णः, वृक्णवान् इति भाष्यादावुक्तरूपानुपपत्तिः, तादवस्थ्यात्। अतः सकारस्य संयोगादिलोपः श्चुत्वस्यासिद्धत्वात् वृक्ण इत्यादौ तु ओदित्वान्निष्ठानत्वस्य कृताकृतप्रसङ्गितया नित्यत्वात्पूर्वं प्रवृत्तौ झल्परत्वाभावात् षत्वम्।

न चानत्वस्यासिद्धत्वात् झल्परत्वमाश्रित्य संयोगादिलोपः कुत्वं च बाध्येदिति तदुभयं नित्यं भवति। तथा षत्वमपि स्यादिति वाच्यम्। नत्वविधौ निष्ठादेशस्यासिद्धत्वनिषेधेन षत्वस्य

कृताकृतप्रसङ्गित्वाभावात्। भृषट्, भृषड्। भृड्भ्यः, भृड्भ्यामित्यादि। अभ्राक्षीत्, भ्रक्ष्यति, अभार्क्षीत्, भर्क्ष्यतीत्यादौ षढोः कः सीति कत्वे कर्तव्ये षत्वस्यासिद्धत्वं मा भूदिति तस्मात्पूर्वमेतत्पठ्यते। भृड्भ्यामित्यादौ जश्त्वार्थस्ततः प्राक्।

**अयं भावः** – आचार्यविश्वेश्वरसूरिविरचितव्याकरणसिद्धान्तसुधानिधौ भ्रस्ज्धातोः ओदित्वं निराकृतम्। व्रश्च्धातुः सकारोपधः वर्तते। भृष्ट्, भृष्ड् इति रूपे उक्ते।

**वैयाकरणासिद्धान्तकौमुदी** –

153. इणः षः (8–3–39) – वैयाकरणासिद्धान्तकौमुद्यां विसर्गसन्धिप्रकरणे विराजते इदं सूत्रम्। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे नवत्रिंशत्तमं सूत्रमिदम्।

वृत्तिः – इणः परस्य विसर्गस्य षकारः[1] स्यात् पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।

व्याख्यानम् – इण इति पञ्चमी। सोऽपदादावित्यनुवृत्तिरस्ति। विसर्जनीयस्येत्यनुवृत्ति– रस्ति। कुप्वोरित्यनुवृत्तिरस्ति। पूर्वविषये इत्युक्ते पाशकल्पककाम्येषु परेषु अनव्ययस्य विसर्गस्य षः इत्यर्थः। काम्ये परे तु रोरेव विसर्गस्य षः इति तात्पर्यम्।

सर्पिः पाशम् इत्यवस्थायां पकारोत्तरमिकार इण्। ततः विसर्गः। ततः पाशमिति शब्दः। तत्रादौ पकारः। अतः प्रकृतसूत्रेण षकारे सर्पिष्पाशम् इति रूपं सिध्यति। अनेन सूत्रेण पूर्वविषये एव षत्वं विधीयते।

**बालमनोरमा** –

इण इति पञ्चमी। परस्येत्यध्याहार्यम्। विसर्जनीयस्येनुवर्तते। तदाह–इणः परस्येति। पूर्वविषये इति। अत्र कुप्वोः इति अपदादौ इति अनव्ययस्य इति, काम्ये रोरेव इति च सम्बध्यते इति भावः। तेन उच्चैः कल्पं, दोःपाशम्, गीः काम्यतीत्यादौ न षत्वमिति भावः। सर्पिष्पाशमित्यादौ पूर्ववत् पाशकल्पकादि।

**अयं भावः** – प्रकृतसूत्रे आवश्यकपदानामनुवृत्तिरुक्ता। पूर्वविषये इति कथनात् उच्चैःकल्पम् इत्यादौ न षत्वमिति भावः।

**तत्त्वबोधिनी** –

सोऽपदादौ इत्यस्यायमपवादः।

**अयं भावः** – सोऽपदादाविति सूत्रेण विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः इति सूत्रार्थः। सर्पिः पाशम् इत्यवस्थायां सोऽपदादाविति सूत्रेण सकारे प्राप्ते तं बाधित्वा प्रकृतसूत्रेण षत्वे सर्पिष्पाशम् इति रूपं सिध्यति। अतः पाशकल्पादिषु परेषु इणः परस्य विसर्गस्य षत्वमेव न तु सः।

**प्रौढमनोरमा –**

पूर्वस्यापवादः। इदं सूत्रं स इति च द्वयमपि उत्तरत्रानुवर्तते। यथासम्भवमिणः परस्य षोऽन्यस्य स इति विवेकः।

**अयं भावः** – अयं योगः सोऽपदादाविति सूत्रस्यापवादः। इणः षः इति सूत्रं स इति च द्वयमपि उत्तरत्रानुवर्तते।

**लघुशब्देन्दुशेखरः –**

इदुदुपधस्य इत्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्यर्थं गीष्पाशं दोष्कल्पमित्याद्यर्थञ्चेदम्। अत्रानव्ययस्येत्यपदादाविति काम्ये इति च सम्बध्यते। तेनोचैः कल्पं, दोः पश्य, गीः काम्यातीत्यादौ षत्वं न। अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति भाष्योक्तपक्षान्तरं सङ्गच्छते। विसर्जनीयस्थानिकेत्युक्त्या पुँस्पुत्र इत्यादौ न दोषः। तत्र हि मस्थानिकः सः। अत्र विसर्जनीयस्येनुवृत्त्या एतदर्थलाभःभ। अनव्ययस्येत्यादि त्वत्र पक्षेऽत्र न सम्बध्यते। तेन द्विष्कृतं दुष्काम्यातीत्यादौ षत्वसिद्धिः। गीः काम्यतीत्यादौ सकाराभावादेव न दोषः। अपदादाविति च सम्बध्यते। तेन दुष्करोतीति षत्वसिद्धिः। परन्त्वयं पक्षोऽसङ्गतः। उत्तरसत्वस्यासिद्धत्वेन निष्कृतमित्यादौ षत्वासिद्धेः। ''प्रकरणे प्रकरणमसिद्धं न योगे योग'' इति पक्षस्तु नास्त्येव। ज्ञापकासम्भवादिति उपसर्गादसमासेऽपि इत्यत्र निरूपयिष्यामः। विसर्जनीयस्यैव षत्वमिति मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः।

**अयं भावः** – प्रकृतसूत्रस्य प्रयोजनं तु सर्पिष्पाशमित्यादौ सत्वनिवृत्तिः गीष्पाशमित्यादौ षत्वप्राप्तिः। अनव्ययस्येत्यादिसम्बन्धात् उच्चैःकल्पम् इत्यादौ न षत्वम् अव्ययविसर्गत्वात्। इणः परस्य विसर्गस्थानिकस्य सस्य अनेन षत्वमिति भाष्योक्तपक्षान्तरेण पुँस्पुत्र इत्यादौ न दोषः। अत्र तु मस्थानिकः विसर्गः। अतो न षत्वम्। विसर्गस्थानिकसकारस्य षत्वपक्षः असङ्गतः। प्रकरणे प्रकरणमसिद्धं न योगे योग इति पक्षोऽपि नास्ति।

**महाभाष्यम् –**

किमविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते आहोस्विदिण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते। किञ्चातः यद्यविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते निष्कृतं, निष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति। अथेण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते सत्वमप्यनुवर्तते उताहो न। किंचातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तं नमस्पुरसोर्गत्योः इत्यत्र सकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्तते उताहो न। किञ्चातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तं तिरसोऽन्यतरस्यामित्यत्र सकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्तते उतोहो न। किञ्चातः। यद्यनुवर्तते षत्वमपि प्राप्नोति। अथ निवृत्तं द्विस्त्रिश्चतुरिति कृत्वोऽर्थे, इसुसोः सामर्थ्ये, नित्यं समासेऽनुत्तरपदस्थस्येति षकारग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्तते उताहो न। किञ्चातः। यद्यनुवर्तते सत्वमपि प्राप्नोति। अथ निवृत्तम्–अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्येति सकारग्रहणं कर्तव्यम्। यथेच्छसि तथास्तु।

अस्तु तावदविशेषेण सत्वमुक्त्वा इण उत्तरस्य षकारस्य षत्वमुच्यते। ननु चोक्तं–निष्कृतं निष्पीतमित्यत्र सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोतीति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति 'न योगे योगोऽसिद्धः' किं तर्हि? प्रकरणे प्रकरणमसिद्धमिति। यदयमुपसर्गादसमासेऽपि णोपदेशस्येत्यसमासेऽपिग्रहणं करोति। अथवा पुनरस्तु इण उत्तरस्य विसर्जनीयस्य षत्वं विधीयते। ननु चोक्तं सत्वमप्यनुवर्तते उताहो न। किञ्चातः यद्यनुवर्तते सत्वमपि प्राप्नोतीति। नैष दोषः। सम्बन्धमनुवर्तिष्यते। सोऽपदादौ इणः षः। नमस्पुरसोर्गत्योः सकारः। तिरसोऽन्यतरस्यां सकारः। इदुदुपधस्य चाप्रत्ययस्य षकारः। तिरसोऽन्यतरस्यां सकारः। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। सकारोऽनुवर्तते। षकारग्रहणं निवृत्तम्।

**अयं भावः** – सोऽपदादाविति सूत्रेण सकारस्यानुवृत्तिः, इणः ष इति षकरोऽपि। तस्य अनुवृत्तिरपि यदि वर्तेत तर्हि क्वचित् सकारस्य क्वचित् षकारस्यानुवृत्तिः अपेक्षते। परन्तु उभयमपि सर्वत्र प्राप्नोति। यथा–इणः ष इत्यत्र सकारः प्राप्नोति। अनुवृत्तौ निवृत्तौ नमस्पुरसित्यत्र पुनः सकारग्रहणं कर्तव्यम्। एवमेवाग्रेऽपि। द्विस्त्रिरिति अत्रापि सत्वं प्राप्नोति। निवृत्तिः कथनीया इति दोषः। यदि प्रथमपक्ष आद्रियते तर्हि निष्कृतं निष्पीतमित्यादौ सत्वस्यासिद्धत्वात् षत्वं न प्राप्नोतीति दोषस्तदवस्थ एव इति चेत् न योगे योगोऽसिद्धः। अपि तु प्रकरणे प्रकरणमसिद्धमिति समाधीयते। द्वितीयपक्षे सत्वस्याप्यनुवृत्तौ सम्बन्धमनुवर्तिष्यत इति यत्र इण उत्तरं विसर्गस्य षकारः। अन्यत्र सकार इति विषयविभागेन समाधीयते।

**काशिकावृत्तिः** –

अपदादौ इति वर्तते। इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः पाशकल्पककाम्येषु। पाश–सर्पिष्पाशम्, यजुष्पाशम्। कल्प–सर्पिष्कल्पम्, यजुष्कल्पम्। क–सर्पिष्कम्, यजुष्कम्। काम्य–सर्पिष्काम्यति, यजुष्काम्यति। अपदादौ इत्येव– अग्निः करोति, वायुः करोति। अग्निः पचति, वायुः पचति। कुप्वोः इत्येव–सर्पिस्ते, यजुस्ते। इत उत्तरम् 'स' इति इणः ष इति च वर्तते। तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवति। अन्यस्य सकारो भवति।

**अयं भावः** – इण उत्तरस्य विसगस्यैव षकारः। अन्यस्य सकार इति निर्णयः। अपदादौ, कुप्वोः इत्यनयोः अनुवृत्तिरस्ति। तेन अग्निः करोति, सर्पिस्ते इत्यादौ षत्वस्य वारणं भवति। पाशकल्पककाम्येषु परेष्वेव प्रकृतसूत्रेण विधीयमानं कार्यं भवति।

**व्याकरणसिद्धान्तसुधानिधिः** –

इणः परस्य विसर्गस्य षत्वं स्यादपदाद्योः कुप्वोः परतः। इण्ग्रहणं परेणेत्युक्तम्। सर्पिष्काम्यति, सर्पिष्पाशम्, सर्पिष्कम्, सर्पिष्कल्पम्। स्यादेतत् किमविशेषेण सकारं विधाय इणः परस्य सस्य षत्वं विधीयते उतास्य सत्त्वापवादतया इणः परस्य विसर्गस्यैव षत्वं विधीयते। नाद्यः। निष्कृतमित्यादौ इदुदपधस्य चेति सत्वस्यासिद्धत्वात् षत्वं न स्यात्, सर्पिष्पाशमित्यादौ वचनस्य चरितार्थत्वात्। नान्त्यः। तदा हि अत्र सत्वमनुवर्तते न वा? आद्ये पाक्षिकं सत्वमपि स्यात्। अन्त्यं नमस्पुरसोरित्यत्र सकारग्रहणापत्तिः। तत्रापि षकारानुवृत्तौ पक्षे षत्वमपि स्यात्। सूत्रान्तरेष्वपि चोदनीयम्, तथाहि नमस्पुरसोरित्यत्र सकारग्रहणे इदुदुपधस्येत्यत्र षकारग्रहणं कर्तव्यं तत्रापि सकारानुवृत्तौ तस्याप्यापत्तिः।

अननुवृत्तौ तिरसोऽन्यतरस्यामित्यत्र सकारग्रहणापत्तिः। तत्रापि षकारानुवृत्तौ पक्षे तदावृत्तिः। अननुवृत्तौ द्विस्त्रिश्चतुरित्यादिसूत्रत्रये षकारग्रहणापत्तिः। तत्रापि सत्वानुवृत्तौ पक्षे तदापत्तिः। अननुवृत्तौ अतः कृकमीत्यत्र सकारग्रहणापत्तिरिति चेत्सत्यम्। पक्षद्वयस्याप्यदोषत्वात्। तथाहि – यत्तावदुक्तं सत्वस्यासिद्धत्वात् षत्वं न स्यादिति तत्र योगो योगेनासिद्धः। किन्तु प्रकरणेन प्रकरणमित्यभ्युपगमात्। अत्र च लिङ्गम् उपसर्गादसमासेऽपि णोपदेशस्येति सूत्रे समासेऽपीत्यभिधानमिति। अन्यत्र सस्यैवेति।

**अयं भावः** – अविशेषेण सकारं विधाय इणः परस्य सस्य षत्वं विधीयते इति पक्ष– द्वयस्यापि अदोषत्वमुक्तम् स्यादेतदित्यनेन। एवं च यत्र इणः परस्य सम्भवः तत्रैव षत्वमन्यत्र सत्वमिति विषयविवेकः।

**उद्योतनम्** –

अस्यैवेति। तस्य पूर्वभावित्वेन षत्वविधौ सिद्धत्वात्। वक्ष्यमाणेति। इदुदुपधस्य चाऽ– प्रत्ययस्य इत्यनेन सकारं विधायानेन षत्वं विधेयमिति वक्तव्यम्। अस्मिन् कर्तव्ये तस्यासिद्धत्वात् षत्वं न स्यात्। विसर्जनीयस्य तु स्थानित्वे तस्य खरवसानलक्षणस्य सिद्धत्वात् निष्पीतमित्यादौ षत्वसिद्धिरित्यर्थं ज्ञापकत्वमुपपादयति–अन्तरेणेति। न चेति। पूर्वपदस्थान्निमित्ताच्चेण्णत्वं, संज्ञायामेवेति नियमादसंज्ञायां प्रणाम इत्यादौ णत्वं न स्यात्। तत्र णत्वार्थम् असमासेऽपि इति वक्तव्यमित्यर्थः। नियमे कर्तव्य इति। नियमस्य पूर्वत्वात् णत्वस्य परत्वात्। अतो णत्वस्य नियमेन व्यावृत्त्यभावादसमासेऽपि ग्रहणं न योगे योगोऽसिद्धः, किन्तु प्रकरणे प्रकरणमसिद्धमिति ज्ञापयति। तत्र णत्वप्रकरणस्यैकत्वात् नियमे कर्तव्ये उपसर्गादिति णत्वस्य सिद्धत्वान्नियमेन व्यावृत्तिः स्यात्। तन्मा भूदिति असमोसेऽपि ग्रहणं सार्थकमित्यर्थः। प्रकृते निमित्तभेदात् प्रकरणैक्यमाह–यद्यपीति। विसर्जनीयः स्थानी यस्य, सकारः स्थानी यस्य तत्त्वात् इति विग्रहः। इणः ष इत्यत्र सोऽपदादौ इत्यस्यानुवृत्ताविणः परस्य विसर्जनीयस्य सकारोऽपि किं न स्यात्, अत आह–न चेणः परस्येति। चकारेति। इणः षश्चेति चकाराभावादित्यर्थः। सम्बन्धमनुवर्तिष्यते इति भाष्यं संक्षेपेण व्याचष्टे–तत्र स इति ष इति चेति।

**अयं भावः** – इदुदपधस्य चाप्रत्ययस्य इत्यनेन सकारं विधाय अनेन सूत्रेण षत्वं विधेयमिति वक्तव्यम्। इणः ष इति कर्तव्ये इदुदुपधस्येति षत्वम् असिद्धं स्यात्। विसर्जनीयस्य स्थानित्वे तस्य खरवसानलक्षणस्य सिद्धत्वात् 'निष्पीतम्' इत्यादौ षत्वसिद्धिः भवति। असमासेऽपिग्रहणं प्रकरणे प्रकरणमसिद्धं न योगे योग इति विषयं ज्ञापयति।

**नारायणीयम्** –

इणः ष इत्यनेनेति। इयमस्मिन् पक्षे वस्तुस्थितिः – सकार एवोत्तरत्र सर्वत्र कुप्वोरित्यधिकृत्य विधीयते। अनेन तु तस्यैव सकारस्य इण उत्तरस्य षत्वं विधीयते न विसर्जनीयस्य। अपदादाविति चात्र न सम्बध्यते। कथं पुनरत्र सकारः स्थानी लभ्यते। उच्यते, योऽयं सोऽपदादौ इति सकारः प्रकृतः स इहानुवर्तते। तस्येणः पञ्चम्याः षष्ठीप्रकल्पनात् स्थानित्वं सिद्धम्। एवं च वक्ष्यमाणैर्योगैर्विहितस्य सकारस्य षत्वं न प्राप्नोति। अस्मिन् कर्तव्ये तस्यासिद्धत्वात्। तर्हीदं निरवकाशः स्यादिति चेत्, नेत्याह–सोऽपदादावित्यस्येवेति। असमासेऽपिग्रहणस्योक्तेऽर्थे ज्ञापकत्वमुपपादयति –अन्तरेणापीति। ननु समासे पूर्वपादात् इति नियमात् न प्राप्नोतीत्यसमासेऽपीत्युच्यत इत्यत्राह–न चेति।

अत्रैकप्रकरणत्वस्यासिद्धिमाशङ्क्य परिहरति–यद्यपीति। ननु इणः ष इत्यत्र स इत्यनुवर्तनात् सत्वमपि प्राप्नोतीत्यत्राह–न चेति। न चानुवृत्तिसामर्थ्यत् प्रसङ्गः, उत्तरार्थमप्यनुवृत्तिसम्भवात्। उत्तरेऽपीति। एतच्च भाष्य एव स्पष्टम्।

**अयं भावः** – सकार एव उत्तरत्र सर्वत्र विधीयते। तस्यैव सकारस्य अनेन इण उत्तरस्य सकारस्य षत्वं विधीयते। न तु विसर्जनीयस्य।

**प्रदीपः** –

सत्वस्यासिद्धत्वादिति। इणः ष इत्यनेन यदा सस्य षत्वं विधीयते तदा सोऽपदादावित्यस्यैव सस्य सर्पिष्कादौ षत्वं स्यात्। वक्ष्यमाणयोगेन विधीयमानस्य तु सस्य षत्वेऽसिद्धत्वात्षत्वं न प्राप्नोतीत्यर्थः। असमासेऽपिग्रहणमिति। अन्तरेणाऽप्यसमासेऽपिग्रहणं विशेषानुपादानात् समासासमासयोर्णत्वं सिध्यति। न च समासे 'पूर्व पदात्संज्ञयामगः' इति नियमेन णत्वस्याऽप्राप्तिः। नियमे कर्तव्ये उपसर्गादित्यस्य णत्वस्याऽसिद्धत्वान्नियमाऽभावात्। तदेतदसमासेऽपिग्रहणं यथोक्तमर्थं ज्ञापयति। यद्यपि स्थानिभेद आदेशभेदश्च, यस्य विसर्जनीयस्थानित्वात् षस्य सकारस्थानित्वात् तथापि कुप्वोरधिकारादेकनिमित्तत्वादेकप्रकरणत्वावसायः। सम्बन्धमिति। न चेणः परस्य सकारः प्राप्नोति षकारेण तस्य बाधनाच्चकाराऽकरणाच्च। तत्र स इति ष इति च स्वरितत्वादुत्तरत्रानुवर्तते। उत्तरेऽपि योगाः स्वरितत्वप्रतिज्ञानाद्योगान्तरेषु केचित्षकारसम्बद्धाः केचित्सकारसम्बद्धा अनुवर्तन्ते इति यथेष्टं सकारषकारादेशप्रवृत्तिः।

**अयं भावः** –

सस्य षस्य च कुप्वोरधिकारादेकनिमित्तत्वादेकप्रकरणत्वावसायः। इणः परस्य तु सकारो न भवति। षकारेण सकारस्य बाधनात् चकाराकरणाच्च। तत्र सूत्रयोः स इति ष इति च स्वरितत्वात् उत्तरत्रानुवर्तते। तेन केचित् योगाः सकारसम्बद्धाः केचित् षकारसम्बद्धाः च अनुवर्तन्ते। तेन यथेष्टं सकारषकारादेशप्रवृत्तिर्भवति। एतदेव मनसि निधाय इणः परस्प विसर्गस्य षत्वमन्यस्य सत्वमिति। एवं च पाशकल्पकाम्येषु परेषु इणः परस्य विसर्गस्य षकारो भवति।

## वैयाकरणसिद्धान्तकौमुदी –

155. इदुदुधस्य चाऽप्रत्ययस्य (8–3–41)। वैयाकरणसिद्धान्तकौमुद्यां विसर्गसन्धिप्रकरणे षत्वविधायकमस्ति इदम्। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे एकचत्वारिंशत्तमं सूत्रमिदं षत्वविधायकम्। वृत्तिः – इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः परयोः। निष्प्रत्यूहम्, आविष्कृतम्, दुष्कृतम्[2]। अप्रत्ययः किम्?– अग्निः करोति। वायुः करोति। एकादेशशास्त्रनिमित्तकस्य न षत्वम्। कस्कादिषु भ्रातृष्पुत्रशब्दस्य पाठात्। तेनेह न – मातुः कृपा।

व्याख्यानम् – इदुदुपधस्य, च, अप्रत्ययस्य इति त्रिपदात्मकमिदं सूत्रम्। इच्च उच्च इदुतौ। इदुतौ उपधे यस्य स इदुदुपधः। तस्य इदुदुपधस्य। न प्रत्ययः अप्रत्ययः। तस्य अप्रत्ययस्य। विसर्जनीयस्य स इति सूत्रात् विसर्जनीयस्येति अनुवर्तते। इणः ष इत्यस्मात् ष इति अनुवर्तते। कुप्वोः कःपौ च इति

कुप्वोः इति अनुवर्तते। एवञ्च सूत्रार्थो भवति इकारोकोपधस्य अप्रत्ययस्य विसर्गस्य षः स्यात् कुप्वोः परयोः।

उदाहरणम् – निष्प्रत्यूहम्। निः प्रत्यूहम् इत्यवस्थायां निः इत्यत्र इकारः उपधायां वर्तते। अतो विसर्गस्य स्थानेऽनेन सूत्रेण षत्वे निष्प्रत्यूहम् इति सिध्यति। अप्रत्ययस्य इत्यस्य किं प्रयोजनमित्याकाङ्क्षायां अग्निः करोति इत्यत्र विसर्गस्य षत्वकरणम्। अत्र विसर्गः प्रत्ययसम्बद्धः। अतस्तस्य न षत्वम्। कस्कादिगणे भ्रातृष्पुत्रशब्दस्य पाठात् ज्ञायते यत् एकादेशशास्त्रनिमित्तकस्य न षत्वम् इति। तेन मातुः कृपा इत्यत्र न षत्वमिति भावः। अन्यथा अनेनैव सूत्रेण षत्वे सिद्धे गणपाठे भ्रातृष्पुत्रशब्दपाठो व्यर्थः स्यात्।

**बालमनोरमा** –

विसर्जनीयस्येनुवर्तते। इदुदुपधस्येति तद्विशेषणम्। इदुतौ उपधे यस्येति बहुव्रीहिः। कुप्वोरिति चानुवर्तते। तदाह–इकारोकारेति। अप्रत्ययस्येपि। प्रत्ययावयवभिन्नस्येत्यर्थः। प्रत्ययभिन्नस्य विसर्गस्येत्यर्थे तु कविभिः कृतमित्यत्रापि षत्वं स्यात्। तत्र भिसः प्रत्ययत्वेऽपि विसर्गमात्रस्य प्रत्ययत्वाभावात्। अत्र 'इदुद्भ्यामप्रत्ययस्य' इत्येतावतैव इदुद्भ्यामुत्तरस्य विसर्गस्येत्यर्थस्य सिद्धत्वादुपधाग्रहणं न कर्तव्यमिति हयवरट्सूत्रे भाष्ये स्थितम् – ''उपधाग्रहणं न करिष्यते। इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति। निष्प्रत्यूहमिति। प्रत्यूहो विघ्नः। तस्याभावो निष्प्रत्यूहम्। अर्थाभावे अव्ययीभावः। आविष्कृतमिति। प्रकाशे प्रादुराविः स्यादित्यमरः। दुष्कृतमिति दुस् दुरिति प्रादौ पठितम्। तत्र प्रथमस्य सान्तस्य षत्वं निर्विवादम्। रेफान्तस्य तु इदुदुपधस्य सकारस्य यो विसर्जनीयः इति हयवरट्सूत्रस्थभाष्यसम्मतपक्षान्तरे षत्वं न भवति, तत्र विसर्जनीयस्य सकारस्थानिकत्वाभावात्। अग्निः करोतीति। विसर्गस्य व्यपदेशिवद्भावेन प्रत्ययावयवत्वादिति भावः। ननु मातृशब्दात् पञ्चम्येकवचनं ङसिः। 'ऋत उत्' इति ऋकारस्य अकारस्य च उकार एकादेशः। सत्वम्। मातुर् स् इति स्थिते रात्सस्य इति सलोपः। मातुः कृपेत्यत्रापि षत्वं स्यात्। उर् इत्येकादेशस्य पूर्वान्तत्वेन अप्रत्ययतया तदवयवरेफस्थानिकविसर्गस्य प्रत्ययावयवत्वाभावात्। न च उ इत्यस्यैव एकादेशतया पूर्वान्तत्वेऽपि रेफस्य प्रत्ययावयवत्वमस्तीति वाच्यम्। उरण् रपर इत्यत्र आद्यन्तौ टकितौ इत्यतः अन्तग्रहणानुवृत्तिं स्वीकृत्य रेफस्य एकादेशान्ततताया भाष्ये सिद्धान्तितत्वात्। अत एव च रदाभ्याम् इति सूत्रे थलि च सेटि इति सूत्रे च गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिवर्तते' इति भाष्यम्। उः स्थाने अण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफः इति कैयटश्च संगच्छते। न च उर् इत्यस्य परादित्वे प्रत्ययावयवत्वमस्तीति वाच्यम्। मातृ अस् इत्यस्यां दशायां हि सकारसन्निधौ अकारस्य प्रत्ययत्वाभावेन तत्स्थाने भवन् उर् इत्यादेशः प्रत्ययत्वं न भजते। प्रत्ययत्वस्य समुदायनिवेशितत्वात्। यस्तु कृते उरादेशे अवशिष्टः सकारः प्रत्ययसंज्ञकः स तु लुप्त एव। अस्तु वा परादित्वेन उर् इत्यस्य प्रत्ययत्वम्। तथापि तस्य पूर्वान्तत्वात् अप्रत्ययत्वात् तद्विसर्गस्य षत्वमप्रत्यूहम्। न च अन्तवत्त्वे कर्तव्ये षत्वस्यासिद्धत्वाद् न तत्रान्तवत्त्वप्रवृत्तिरिति वाच्यम्। पूर्वत्रासिद्धे न स्थानिवत् इत्युक्त्या तदितरादेशानां त्रिपाद्यामपि प्रवृत्त्यभ्यनुज्ञानात्। अत एव अमी क्षीरपेणेत्यत्र ईत्वणत्वे सिध्यतः। तत्र एकारे अदश्शब्दसम्बन्धित्वस्य पे इत्यत्र एकाजुत्तरपदत्वस्य च अन्तवत्त्वाधीनत्वात्। तस्माद् उर् इत्यस्य पूर्वान्तत्वे मातुः कृपा इत्यत्र षत्वं दुर्वारमित्यत आह–एकादेशेति। एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रनिमित्तकत्वमिति भावः। भ्रतुष्पुत्रेति।

एकादेशशास्त्रनिमित्तकस्यापि विसर्गस्य षत्वप्रवृत्तौ भ्रातृष्पुत्रशब्दस्य पाठो व्यर्थः स्यात्। कस्कादिषु च इति षत्वार्थो हि तत्र पाठः। षत्वस्य च अनेनैव सिद्धौ किं तेनेति भावः।

**अयं भावः –**

अप्रत्ययस्य, विसर्गस्य इत्यनेन सह कथमन्वय इत्युक्ते प्रत्ययावयवभिन्नस्येत्यर्थस्वीकारेण प्रत्ययावयवभिन्नस्य विसर्गस्य ष इति अर्थः सिध्यति। केवलं प्रत्ययभिन्नस्य विसर्गस्य इत्युक्ते कविभिः कृतमित्यादौ भिः□इत्यत्र भिसः विसर्गस्य प्रत्ययभिन्नत्वात् षत्वं स्यात्। यतः भिसः प्रत्ययत्वेऽपि केवलं विसर्गस्य प्रत्ययभिन्नत्वादिति आशयः। ननु अग्निः करोति इत्यादौ विसर्गस्य प्रत्ययस्वरूपत्वात् प्रत्ययावयवत्वाभावात् कथं षत्वप्राप्तिः इति चेन्न। विसर्गस्य व्यपदेशिवद्भावेन प्रत्ययावयवत्वमुच्यते। ननु मातुः कृपा इत्यादौ इकारोपधस्य उर् इत्येकादेशस्य पूर्वान्तत्वेन अप्रत्यतया तदवयरेफस्थानिकविसर्गस्य प्रत्यावयवत्वाभावात् षत्वं स्याात्खलु इति चेदुच्यते। □भ्रातुः पुत्र इति शब्दस्य कस्कादिगणपाठात् षत्वं विहितम्। यदि इकारोकारोपधस्य अप्रत्ययविसर्गस्य षत्वं भवति तर्हि निमित्तसत्त्वात् भ्रातुष्पुत्र इत्यत्रापि इदुदुपधेति सूत्रेणैव षत्वं वक्तुं शक्यते। पुनः गणपाठः अस्य व्यर्थो भवति। अतः एकादेशशास्त्रनिमित्तकस्य षत्वं यदि स्यात् तर्हि गणपाठे विद्यमानस्य भ्रातृष्पुत्रशब्दस्यैव नान्यस्य इति नियमः सिध्यति। तेन मातुः कृपा इत्यत्र ऋत उत् इति सूत्रेण ऋकारस्य अकारस्य च स्थाने उकार एकादेश उरण् रपर इति रपरः सन् उर् इति प्रवर्तते। ततः सस्य लोपे रेफस्य विसर्गः। तस्य विसर्गस्य एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन एकादेशशास्त्रनिमित्तकत्वमिति भावः।

**तत्त्वबोधिनी –**

इदुदिति किम्? गीः करोति, पूः करोति, इह इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग इति वैयधिकरण्येन सम्बन्धः। अप्रत्ययस्येति तु अप्रत्ययो यो विसर्ग इति सम्बध्यते। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्येति निषेधेनैव सिद्धत्व– ज्ञापनात्। अत एव अग्निरित्यादौ रोर्विसर्गः सिध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन अचः परस्मिन् .. इति त्रिपाद्यां न प्रवर्तते। एवं च पूर्वत्रासिद्धीचे न स्थानिवत् इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम्। अत्र वदन्ति–अप्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्याद्यर्थ एव आकरे स्थित इति अप्रत्ययो यो विसर्ग इति सामानाधिकरण्येनान्वयो न युक्तः। सर्पिष्करोतीत्यत्र इसुसोः सामर्थ्ये इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्र इदुदुपधरय इत्यनेन नित्यं षत्वप्रसङ्गात्। न चाकरमतेऽप्युणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्। व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्, इसुसोः... इत्यत्र सर्पिष्करोतीत्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात्। अन्यथा इदुदुपधस्य... इत्यनेनैव व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेः तदुदाहरणस्यासङ्गतिप्रसङ्गात्। किञ्च तिष्ठतु सर्पिरित्यादौ इदुदुपधस्य.. इति षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः इति स्वमूलग्रन्थविरोध इति। अत्र केचित्। इदुद्भ्यामप्रत्ययस्येति वक्तव्ये इदुदुपधस्येति ग्रहणं नित्यं च इदुदुपधस्तस्यैव

विसर्गस्य षत्वं यथा स्यात्, कविभिः□ कृतमित्यादौ मा भूदित्येवमर्थम् । भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति रामैरित्यादौ तदभावादिति तन्न, अग्निः करोतीति निषेधोदाहरणस्यासङ्गत्यापत्तेः। देव इत्यादावकारोपधत्वात् प्रियचत्वा इत्यादावकारोपधत्वेन चतुष्कपाल इत्यादौ षत्वानापत्तेश्चेति यत्किञ्चिदेतत्। अन्ये तु प्रत्ययस्य यो विसर्जनीयो न भवति

इत्यादिव्याख्याने तूक्तोदाहरणे षत्वस्याप्रवृत्तेरुपधस्येत्येतत्सुत्यजमित्याहुः। स्यादेतत्, अप्रत्ययग्रहणमेव स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापकमित्युक्तम्। तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत्। अत्राहुः– नमुने इत्यत्र नेति योगं विभज्य स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धेति व्याख्यायते। प्रत्ययः परश्च इत्यादिनिर्देशाश्चेहानुकूलाः। योगविभागस्येष्टसिद्ध्यर्थत्वाद् अचः परस्मिन् इति सूत्रं प्रति त्वसिद्धैव। ततश्च पूर्वत्रासिद्धे न स्थानिवत् इति सिद्धान्तो युक्तिमूलक इत्यादि सर्वं सङ्गच्छत इति। अप्रत्ययो विसर्ग इति सामानाधिकरण्यपक्षे मातुः कृपेत्यादौ इदुदुपधस्येति षत्वमाशङ्क्याह एकादेशशास्त्रनिमित्तकस्येति। मातुरित्यत्र हि ऋत उत् इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। आकरे तु एकादेशनिमितात् इति प्रचुरः पाठः। तत्र एकादेश एकादेशशास्त्रम्, तन्निमित्तं यस्य उकारस्य तस्मादित्यर्थः। नन्वेवम् अप्रत्ययस्य इत्यत्र सामानाधिकरण्यपक्षोऽप्याकरसम्मत इति चेदत्राहुः – प्रत्येकं संयोगसंज्ञा इति पक्ष आकरसम्मतोऽपि यथा निष्प्रयोजनस्तथायमपि। वैयधिकरण्यपक्षस्त्वावश्यक एव। अन्यथा तिष्ठतु सर्पिः पिबत्वमुदकमित्याद्यसिद्ध्यापत्तेरिति। भ्रातृष्पुत्रशब्दस्य पाठादिति। न च षत्वतुकोरसिद्धः इत्येकादेशशास्त्रस्यासिद्धत्वात्षत्वाप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थ इति वाच्यम्। षत्वे तुकि च कर्तव्ये पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्ध इति सिद्धान्तात्। अन्यथा शकहूष्वित्यत्र षत्वं न स्यात्। शकान् ह्वयन्तीत्यत्र आदेच उपदेशे... इत्यात्वे क्विपि सम्प्रसारणे कृते सम्प्रसारणाच्च इति पूर्वरूपैकादेशे च हलः इति दीर्घः। भवति हि कोऽसिचत्, सोऽसिचत् इत्यादौ पदान्तपदाद्योरादेशः। तेन तत्र षत्वनिषेधः सिध्यति, न तु शकहूष्वित्यत्र। एवं च भ्रातृष्पुत्र इत्यत्रापि षत्वतुको... इत्येकादेशशास्त्रमसिद्धं न भवतीत्युक्तं ज्ञापकं सुस्थमेव। ननूक्तज्ञापकात् शकहूष्वित्यत्रापि मातुः कृपेत्यत्रेव षत्वं न स्यात्। मैवम्, तुल्यजातीयस्य ज्ञापकत्वात्, कश्च तुल्यजातीयः, यः कुप्वोरिति दिक्।

**अयं भावः** –

इदुदुपधस्य विसर्गस्य च वैयधिकरणयेनान्वयः स्वीकृतः। अप्रत्ययस्य विसर्गस्य इति सामानाधिकरण्येनान्वयः स्वीकृतः। अदिशं प्रति त्रिपाद्या असिद्धत्वं न शङ्कनीयम्। यतः अप्रत्ययस्य इति निषेधेन एव सिद्धत्वं ज्ञाप्यते। अत्र ज्ञापकं विशेषापेक्षम्। तेन अचः परस्मिन् पूर्वविधौ इति त्रिपाद्यां न प्रवर्तते। पूर्वत्रासिद्धीये न स्थानिवत् इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमाया मुक्तमस्ति।

केचन वदन्ति यत् अप्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्ग न□भवतीत्यर्थ एव आकरे स्थितः। अप्रत्ययः यः विसर्गः इति सामानाधिकरण्येनान्वयः न युक्त इति। यतः तिष्ठतुसर्पिः पिबत्वमुदकमित्यादौ इदुदुपधेति षत्वं प्राप्नुयात्। वार्तिककारेण उणादीनां युत्पत्तिपक्ष एव आदृतो भाति। पुनः केचिद्वदन्ति – इदुदभ्यामप्रत्ययस्येति वक्तव्ये इदुदुपधस्येति ग्रहणं कुत इत्युक्ते नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात् कविभिः कृतमित्यादौ मा भूदित्येवमर्थमिति चेत् तन्न। अग्निः करोतीति निषेधोदाहरणस्यासङ्गत्यापत्तेः।

मातुरित्यत्र एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। न तु साक्षात्। अप्रत्ययस्य इत्यत्र सामानाधिकरण्यपक्षः यद्यपि आकरसम्मतः तथापि निष्प्रयोजन इति भावः।

भातृष्पुत्र इत्यत्र षत्वे कर्तव्ये एकादेशशास्त्रं सिद्धमेवेति भावः।

**प्रौढमनोरमा –**

इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीय इति वैयधिकरण्येन सम्बन्धः। अप्रत्ययस्य इति तु अप्रत्ययो यो विसर्ग इति सम्बध्यते। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्य इति निषेधेनैव सिद्धत्वज्ञापनात्। अत एवाग्निरित्यादौ रोर्विसर्गः सिध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन 'अचः परस्मिन् इति त्रिपाद्यां न प्रवर्तते। एवञ्च पूर्वत्रासिद्धे न स्थानिवत् इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभोऽस्माभिः□

नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेन्न□ कस्कादिषु भ्रातृष्पुत्रशब्दस्य पाठेन ङसिङसोरत उकारान्यरस्य षत्वं नेति ज्ञापकात्। एवं च अप्रत्ययस्य इत्येतदपि व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम्। मातुरिति।

अत्र हि ऋत उत् इत्येकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। आकरे तु एकादेशशास्त्रनिमित्तात् इति प्रचुरः पाठः। तत्र एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः।

**अयं भावः –**

इदुदुपधस्य विसर्गेण सह वैयधिकरण्येनान्वयः। अप्रत्ययः यो विसर्ग इति सामानाधिकरण्येनान्वयः। विसर्गः कथं प्रत्ययो भवतीत्युक्ते स्थानिवद्भावेनेति समाहितम्। अप्रत्ययस्य इति निषेधेन अतिदेशं प्रति त्रिपाद्याः सिद्धत्वं ज्ञाप्यते। अत एव रोः विसर्गः सिध्यति। अन्यथा पदान्तत्वाभावात् खरवसानसानयोरिति विसर्गो न स्यात्। अप्रत्यस्येति ज्ञापकं विशेषापेक्षम्। तेन अचः परस्मिन्–इति त्रिपाद्यां न प्रवर्तते।

मातुः कार्यमित्यत्र षत्वप्राप्तिस्तु कस्कादिषु भ्रातृष्पुत्रशब्दस्य पाठेन ङसिङसोरत उकारात्परस्य षत्वं नेति ज्ञापकात् वार्यते। हरदत्तेन तु अप्रत्ययस्येत्यपि व्यधिकरणमेवेति कथ्यते तन्नाादर्तव्यम्। यतः सम्भवति सामानाधिकरण्ये वैयधिकरण्येनान्वयस्य अन्याय्यत्वात्। मातुः कृपेत्यत्र ऋत उत् इत्येकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। न तु साक्षात्। महाभाष्ये तु एकादेशशास्त्रनिमित्तकस्य न षत्वम् इति प्रचुरः पाठो दृश्यते। एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादिति भावः।

**लघुशब्देन्दुशेखरः –**

अप्रत्ययस्येति पर्युदासो लाघवात्। तत्र प्रत्ययपदं तत्सम्बन्धिपरं तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः। अत एव कविभिः□ कृतमित्यादौ न षत्वं स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः। एकादेशशास्त्रेति। एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोध्यम्। स्पष्टञ्चेदमत्र सूत्रे उरण् रपर इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः। प्रत्ययभिन्नसम्बन्धिन इति तु नार्थः। अग्निः करोतीत्यादावपि प्रत्याभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः। तपरकरणं किम्? गीः करोति। उपधाग्रहणं व्यर्थम्। उपधाग्रहणं न करिष्यते। इदुदुभ्यां तु परं विसर्जनीयं विशेषयिष्याम इति हयवरट्सूत्रभाष्योक्तेः।

**अयं भावः –**

प्रसज्यप्रतिषेधस्वीकारे गौरवात् अप्रत्ययस्येति लाघवात् पर्युदास एव स्वीकृतः। प्रत्ययपदं तत्सम्बन्धिपरम्। तेन प्रत्ययसम्बन्धिभिन्न□स्य विसर्गस्य इत्यर्थः। एवमर्थ– स्वीकारादेव कविभिः□ कृतम् इत्यादौ भिःभ इति प्रत्ययसम्बन्धिविसर्गस्य सत्त्वात् न षत्वम् प्रत्ययसम्बन्ध्यभावस्याभावात्। प्रत्यभिन्नसम्बन्धिन इति तु नार्थः। अग्निः करोतीत्यादौ सुप्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वं प्राप्नुयात्। इदुदभ्यां परस्य विसर्गस्य ष इति व्याख्याने उपधाग्रहणं व्यर्थम्। एतच्च हयवरट्सूत्रे भाष्ये प्रतिपादितम्।

**काशिकावृत्तिः –**

इकारोपधस्य उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः। निर्दुर्बहिराविश्चतुरप्रादुस्। निस्–निष्कृतम्, निष्पीतम्। दुस्–दुष्कृतम्, दुष्पीतम्। बहिस्–बहिष्कृतम्, बहिष्पीतम्। आविस्–आविष्कृतम्, आविष्पीतम्, चतुर्–चतुष्कृतम्, चतुष्कपालम्, चतुष्कण्टकम्, चतुष्कलम्। प्रादुस्–प्रादुष्कृतम्, प्रादुष्पीतम्। अप्रत्ययस्येति किम्? अग्निः करोति। वायुः करोति, मातुः करोति पितुः करोति अत्र रात्सस्य इति सकारलोपे कृते रेफस्य यो विसर्जनीयः तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति? कस्कादिषु तु भ्रातृष्पुत्रग्रहणं ज्ञापकम् – एकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य। पुम्मुहुसोः प्रतिषेधो वक्तव्यः। पुंस्कामा। मुहुःकामा। नैष्कुल्यम्। दौष्कुल्यम्, दौष्परुष्यम्। नि$_3$ष्कुलम्, दु$_3$ष्कुलम्। दु$_3$ष्पुरुषः। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्तते।

**अयं भावः –**

निरादिभ्यः परस्य विसर्गस्य षो भवतीत्युक्तम्। अप्रत्ययस्येति दलस्य प्रयोजनमुक्तम्। मातुः करोति इत्यादौ रेफस्थानिकविसर्गस्य षत्वमाशङ्क्य कस्कादिगणे भ्रातुष्पुत्रशब्दपाठज्ञापकात् एकादेशशास्त्रनिमित्तकस्य षत्वं वारितम्। पुँस्कामा, मुहुःकामा इत्यत्र षत्वस्य प्रतिषेध उक्तः। नैष्कुल्यम् इत्यादौ निः कुल य इत्यवस्थायां षत्वमुत वृद्धिः? इत्युक्ते अन्तरङ्गं षत्वं बहिरङ्गा वृद्धिः। अतः असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया बहिरङ्गवृद्धेरसिद्धत्वात् इकोरोपधस्य विसर्गस्य षत्वं सिध्यति। एवमेव नि$_3$ष्कुलमित्यत्र तत्सत्त्वात् ह्रस्वेकारस्य अभावात् कथं षत्वमित्युक्ते असिद्धपरिभाषया प्लुतस्य असिद्धत्वात् ह्रस्वेकारस्यावगमात् षत्वं सिध्यति इति भावः।

**महाभाष्यम् –**

इदुदुपधस्य चाप्रत्ययस्येति चेत्पुंमुहुसोः प्रतिषेधः। इदुदुपधस्य चाप्रत्यस्येति चेत्पुंमुहुसोः प्रतिषेधो वक्तव्यः। पुँस्कामा। मुहुःकामेति। वृद्धिभूतानां षत्वम्। वृद्धिभूतानां षत्वं वक्तव्यम्। दौष्कुल्यम्। नैष्पुरुष्यम्। प्लुतानां तादौ च। प्लुतानां तादौ च कुप्वोश्चेति वक्तव्यम्। सर्पी3ष्टर। वही3ष्टर। नी3ष्कुल। दु3ष्पुरुष। न वा बहिरङ्गलक्षणात्वाद्वृद्धेः। न वा वक्तव्यम्। किं कारणम्। बहिरङ्गलक्षणाद्वृद्धेः। बहिरङ्गलक्षणा वृद्धिः। इह कस्मान्न भवति, पितुः करोति। मातुः करोति?, अप्रत्ययविसर्जनीयस्येति षत्वं प्रसज्येत। अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्यविसर्जनीयश्चायम्। लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति। एवं तर्हि। भ्रतृष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य। यदयं कस्कादिषु भ्रातृष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात्षत्वं भवतीति।

**अयं भावः –**

अप्रत्ययस्य इदुदुपधस्य विसर्गस्य यदि षत्वं विधीयते तर्हि पुंमुहुसोः प्रतिषेधे वक्तव्यः। तेन पुंस्कामा। मुहुस्कामा इत्यत्र षत्वं न भवति। दुः कुल य इत्यवस्थायां षत्वे वृद्धौ च प्राप्तायाम् असिद्धनियमेन बहिरङ्गत्वात् वृद्धेरसिद्धत्वं प्रतिपादितम् तेन आदौ षत्वं ततः वृद्धिः। दौष्कल्यमिति सिध्यति। एवमेव नी3ष्कुल इत्यादौ प्लुतविषयेऽपि प्लुते सति ह्रस्वेकोरोपधत्वाभावात् षत्वं न स्यादित्याशङ्क्य असिद्धनियमेन प्लुतस्यासिद्धत्वात् षत्वं स्यात्। पितुः करोतीत्यादौ अप्रत्ययस्य विसर्जनीयस्य प्राप्तं षत्वं कस्कादिगणे भ्रातृष्पुत्रशब्दपाठनियमेन एकादेशशास्त्रं निषब्दं भूत्वा तदन्यत्र षत्वं भवति इति भावः।

**प्रदीपः –**

पुंमुहुसोरिति। अव्युत्पन्नावेताविति प्रतिषेधश्चोद्यते। संपुङ्कानां सो वक्तव्य इति वचनात्षत्वं न भविष्यतीति नाऽर्थः पुंसः प्रतिषेधेन। सकारश्चावश्यं वक्तव्यः। रुत्वे हि क्रियमाणे विसर्जनीयस्य प्रतिषिद्धेऽपि षत्वे कपविसर्जनीयश्रवणप्रसङ्गः। ननु सकारस्यापि षत्वं प्राप्नोति, सकारस्य षत्वमित्येषोऽपि स्थितः पक्षः। नैतदस्ति। सकारविधानसामर्थ्यात्षत्वं न भविष्यति। षत्वे हि सति रोः सस्य च विशेषाभावात्किं सत्वविधानेन?। मातुरिति। उभयादेशस्याऽन्यतरतो व्यपदेशाद्रपरत्वे सत्यप्रत्ययविसर्जनीयत्वात्षत्वप्रसङ्गः। प्रत्ययविसर्जनीयश्चायमिति। उभयादेशत्वान्नायमुःस्थान इति रपरत्वाभावात्सकारस्यैव रुत्वविसर्जनीयौ मन्यते। लुप्यत इति। पूर्वोक्तेन न्यायेन रपरत्वं भवत्येव। कस्कादिविति। एकादेशशास्त्रं निमित्तं तस्मात्परस्य विसर्जनीयस्य षत्वं न भवतीति ज्ञाप्यते।

**अयं भावः –**

पुंमहुसौ अव्युत्पन्नौ। अव्युत्पन्नत्वात् प्रत्ययावयवत्वं नास्तीति पुनः प्रतिषेध उक्तः। संपुङ्कानां सो वक्तव्य इति वचनात् पुंसः सकारः अवश्यं वक्तव्य इति ज्ञायते। अन्यथा केवलं षत्वस्य प्रतिषेधे उपध्मानीयस्य जिह्वामूलीयस्यापि वा श्रवणप्रसङ्गः। सकारविधानसामर्थ्यात् षत्वं न भवति।

मातुरित्यत्र उरादेशस्य अप्रत्ययविसर्जनीयत्वात् षत्वप्रसङ्गः। परन्तु कस्कादिषु भ्रातृष्पुत्रशब्दपाठात् एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्य विसर्जनीयस्य षत्वं न भवतीति ज्ञाप्यत इति भावः।

**उद्योतनम् –**

पूञो डुम्सुन् इति डुम्सुन्प्रत्ययान्तस्य पुंशब्दस्य सकारः प्रत्यस्यैवेति अप्रत्ययस्य इत्येव प्रतिषेधो भविष्यति, अत आह – अव्युत्पन्नाविति। पुंसो ग्रहणं प्रत्याचष्टे– संपुङ्कानामिति। ननु षत्वप्रतिषेधे सकार एव भविष्यति संपुङ्कानाम् इत्यत्रैव पुंसो ग्रहणं न कर्तव्यम्, अत आह – सकारश्चेति। प्रतिषिद्धेऽपि षत्वे पुम्मुहुसोः इत्यनेना प्रसङ्ग इति। विकल्पेन त्रयाणां विधानात्। नन्विति। षत्वप्रतिषेधाभावे सकारस्य विसर्जनीयस्य वा षत्वमिति सिद्धत्वात् सस्य षत्वाभावार्थं प्रतिषेधो वक्तव्य इत्यर्थः। सामर्थ्यमेवाह – षत्वे हीति। सस्यापि षत्वे तदविधानेऽपि रुत्वविसर्गयोः कृतयोर्विसर्जनीयस्यैव षत्वसम्भवात् सविधानं व्यर्थं स्यात्। ननु ऋत उत् इत्यकारादेशस्य ऋमात्रस्थानिकत्वाभावेन रपरत्वाभावात् प्रत्ययविसर्जनीय एवायम्, अत आह उभयादेशशस्येति । देवदत्तपुत्रन्यायेनेत्यर्थः। ऋकारमात्रस्थानिकस्यैवाणो रपरत्वमित्याशयेन प्रत्ययविसर्जनीयश्चायम् इत्युच्यत इत्याह–उभयादेशत्वादिति। पूर्वोक्तेन उभयादेशस्याप्यन्यतरतो व्यपदेशः सम्भवतीत्युक्तेन न्यायेन। एकादेशात्परो विसर्जनीयः न तु तन्निमित्तात् परः। अत आह–एकादेशेति। ऋत उत् इत्येकादेशशास्त्रमुकारस्य निमित्तम्। तस्मात् परो यो विसर्जनीयस्तस्येत्यर्थः। भ्रातुष्पुत्र इत्यत्र षत्वनिपातनं पितुः करोति इत्यादौ इदुदुपधस्य इति षत्वं न भवतीति ज्ञापयतीति भाष्यार्थः।

**अयं भावः –**

पूञो डुम्सुन्प्रत्यये पुंस्शब्दः निष्पद्यते। सकारः प्रत्यायावयव इति कृत्वा अप्रत्ययस्येति निषेधेन प्रकृते षत्ववारणं भवति। तन्निमित्तं पुनः वार्तिकं कुत इति चेत् पुंस्शब्दोऽव्युत्पन्नः। एवं मुहुस् शब्दोऽपि अव्युत्पन्नः। सम्पुङ्कानां सो वक्तव्य इति कथनात् पुम्मुहुसोरित्यत्र षत्वनिषेधे पुंसो ग्रहणं नावश्यकम्। संपुङ्कानामित्यत्र पुंसो ग्रहणं मास्तु इति चेत् सकारश्चावश्यं वक्तव्य इत्युक्तम्। यतः षत्वप्रतिषेधाभावे सकारस्य विसर्जनीयस्य वा षत्वमिति सिद्धत्वात् सस्य षत्वाभावार्थं प्रतिषेधो वक्तव्य इत्यर्थः। ऋत उत् इत्येकादेशशास्त्रमुकारस्य निमित्तम्। तस्मात् परो यो विसर्जनीयस्तस्येत्यर्थः। एवं च भ्रातृष्पुत्र इत्यत्र षत्वनिपातनं पितुः करोतीत्यादौ इदुदुपधस्य इति षत्वं न भवतीति भावः।

**नारायणीयम् –**

ननु पातेर्डुम्सुन्, मुहेः कित् इति पुम्मुहुस्शब्दयोर्व्युत्पादितत्वात् अप्रत्ययस्य इति सूत्रेणैव निषेधस्य सिद्धत्वात् किं वचनेनेत्यत आह–अव्युत्पन्नावेताविति। उणादीनां नियमेन व्युत्पत्तिकार्याभावस्य ज्ञापितत्वात्। अत एव चतेरुरन् इति व्युत्पन्नस्य चतुश्शब्दस्य चतुष्कपालम् इत्यादौ षत्वमुदाहृतम्। पुंसः प्रतिषेधस्यावक्तव्यत्वं दर्शयति–संपुङ्कानामिति। नन्विमं प्रतिषेधमभ्युपगम्य सत्वस्यावक्तव्यत्वं किं नोच्यत इत्यत्राह – सकारश्चेति। रुत्वे हीति। सत्वे तु तस्यासिद्धत्वात् रुत्वाभावद्विसर्जनीयाभावः। सत्वेऽपि सति षत्वप्राप्तिमाशङ्क्य परिहरति–नन्विति। उभयादेशस्येति। अत्र मातृ अस् इति स्थिते ऋत उत् इत्युकारो भवन् 'यो ह्युभयोः स्थाने भवति सोऽन्यतरतो व्यपदेशं लभते' इति न्यायेन रपरो भवति। ततः रात्सस्य इति प्रत्ययसकारस्य लोपे रेफस्य विसर्जनीयः। सोऽयमप्रत्ययविसर्जनीय इति षत्व– प्राप्तिरित्यर्थः। एतं न्यायमजानतो वचनं प्रत्ययविसर्जनीयश्चायम् इत्याह–उभयादेशत्वादिति। एकादेशशब्देन शास्त्रमुच्यते, न कार्यम्, निमित्तशब्दोपादानादित्याह –एकादेशशास्त्रमिति।

**अयं भावः –**

पातेर्डुम्सुन्प्रत्यये मुहेः किच्च इति उसि प्रत्यये च क्रमेण पुम्मुहुसोः सिद्धयोः अप्रत्ययस्येति निषेधेनैव सिद्धे किं पुनर्वचनेन इति प्रश्ने अव्युत्पन्नाविमाविति समाधायि। प्रतिषेधे पुसो ग्रहणं न कर्तव्यमित्युक्तम्। प्रतिषेधमिमं समाहत्य सम्पुमिति अत्र सत्वस्यावक्तव्यत्वं कृतो नोच्यते इति चेत् सकारश्चावश्यं वक्तव्य इत्युच्यते। सत्वे तु तस्यासिद्धत्वाद् रुत्वाभावाद्विसर्जनीयाभावः।

'यो ह्युभयोः स्थाने भवति सोऽन्यतरतो व्यपदेशं लभते' इति न्यायेन मातृ अस् इति स्थिते ऋत उत् इत्युकारो भवन् रपरो भवति। ततः रात्सस्य इति प्रत्ययसकारस्य लोपे रेफस्य विसर्जनीयः। एकादेशशब्देन शास्त्रमुच्यते' न तु कार्यम्। निमित्तशब्दस्य ग्रहणादिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

इकारोकारोपधो यः शब्दस्तदवयवस्याप्रत्ययस्य विसर्गस्य षः स्यात् कुप्वोः परत। निष्प्रत्यूहम्। प्रादुष्कृतम्। इदुदुपधस्येति व्यधिकरणषष्ठी। अप्रत्ययस्येति तु समानाधिकरणप्रत्ययभिन्नस्याभेदेन विशेषणं सम्भवत्सामानाधिकरण्यस्य त्यागायोगात्।

न च विसर्गस्य प्रत्ययत्वमसिद्धमिति विशेषणवैयर्थ्यम्, अग्निः करोतीत्यादौ स्थानिवत्त्वेन तत्सिद्धेः। अतिदेशं प्रत्यसिद्धत्वं नेत्यस्याप्यनेन ज्ञाप्यत्वात् अन्यथाग्निरित्यादौ रोरप्रत्यत्वेऽग्निशब्दस्य सुबन्तत्वाभावात्पदत्वाभावे रोरपदान्तत्वात्। पुनरित्यादौ विसर्गविधेः सावकाशत्वात्। ज्ञापकं च विशेषापेक्षम्। तेनाचः परस्मिन्नित्यतिदेशे त्रिपाद्यसिद्धैवेति दीक्षिताः। अन्ये तु अप्रत्यस्येत्यपि वैयधिकरण्ये षष्ठी। प्रत्ययस्य यो विसर्जनीयो न भवतीत्याकरे व्याख्यातत्वात्। तथा च प्रत्यभिन्नसम्बन्धिनो विसर्गस्येत्यर्थः। सामानाधिकरण्येनान्वये तु सर्पिः करोतीत्यत्र इससोः सामर्थ्ये इति षत्वविकल्पस्येष्टत्वेऽपि तिष्ठतु सर्पिः पिब त्वमुदकम् इत्यत्र इदुदुपधस्येति नित्यषत्व– प्रसङ्गात्। इसः प्रत्ययत्वेन तदवयवसकारादेशस्थानिकस्य विसर्गस्य प्रत्यभिन्नत्वसत्त्वात्। न च सिद्धान्तिमतेऽप्युणादीनामव्युत्पत्तिपक्षेऽत्र नित्यषत्वं दुर्वारमिति वाच्यम्, व्युत्पत्तिपक्षे दोषावश्यकत्वात्। इसुसोरित्यत्र सर्पिः करोतीव्युदाहरणेन व्युत्पत्तिपक्षस्यैवात्राकराभिमतत्वालाभाच्च। अन्यथोक्तपदभेदेन इदुदुपधस्येत्यनेनैव रूपद्वयसिद्धौ तदुदाहरणासङ्गत्यापत्तेः। तिष्ठतु सर्पि पिब त्वमुदकमित्यादौ इदुदुपधस्येति षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थ इति कौमुदीग्रन्थविरोधाच्च।

न चाप्रत्ययस्येत्यत्र समानाधिकरणषष्ठ्यनङ्गीकारे अतिदेशं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापकं दुर्लभमिति वाच्यम्, न मु ने इत्यत्र नेति योगं विभज्य स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धेति व्याख्यानात्। भवन्मते ज्ञापकस्येव सिद्धान्तिमते योगविभागस्यापि विशेषापेक्षत्वसम्भवात् प्रत्यय इत्यादिनिर्देशाच्चेत्याहुः। अत्र इदुद्भ्यामित्येवास्तु, इदुद्भ्यां परस्याप्रत्ययस्य विसर्गस्येत एवेष्टसिद्धेरुपधाग्रहणं न कार्यमिति भाष्यम्। एतेन नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं न तु कविभिः□ कृतमित्यादौ भिसो विसर्गस्य रामैरित्यादौ इदुदुपधत्वव्यभिचारादित्यपास्तम्। प्रत्ययस्य न भवति यो विसर्ग इति व्याख्याने षत्वप्रवृत्त्यभावाच्च।

पुंमुहुसोः प्रतिषेधो वक्तव्यः – पुंस्कामा, मुहुःकामा। वृत्तौ तु मुहुस्कामेति सकारपाठः प्रामादिक इति हरदत्तः, ननु मातुः करोति, पितुः करोतीत्यादौ षत्वं न स्यात् ऋत उदिति उत्वे रपरत्वे रात्सस्येति

विभक्तिसकारलोपे च रेफस्य विसर्गात्। अत्र भाष्यम् – एकादेशशास्त्रनिमित्तकस्य न षत्वम्, कस्कादिषु भ्रातृष्पुत्रशब्दपाठात्। अन्यथा अनेनैव सिद्धौ षत्वार्थं तत्र पाठवैयर्थ्यात् एकादेशनिमित्तदित्याकरे पाठः। एकादेशशास्त्रं निमित्तं यस्य उकारस्य ततः परस्येत्यर्थः न तु उक्तस्थले विसर्गरूपः प्रत्यय–सम्बन्धित्वात्प्रसक्तिरेव नास्ति। षत्वस्येत्युक्तशङ्कापरिहारावनुपपत्तौ, सामानाधिकरण्यपक्षे तु विसर्गस्य प्रत्ययभिन्नत्वाद्भवति प्रसक्तिरिति कथं नास्याकरसम्मतत्वमिति चेत्सत्यम्, प्रसक्तिमात्रोपयोगिनः पक्षस्याप्रयोजकत्वात् प्रत्येकं संयोगसंज्ञेति पक्षवत्।

**अयं भावः –**

इदुदुपधस्येति व्यधिकरणषष्ठी। अप्रत्ययस्येति समानाधिकरणषष्ठी। अग्निः करोतीत्यादौ स्थानिवद्भावेन विसर्गस्य प्रत्ययत्वम्। पुनश्च अग्निरित्यादौ रोरप्रत्ययत्वे सुबन्तत्वाभावात् पदत्वाभावे पदान्ते रेफस्याभावात् विसर्गो न स्यात्।

विसर्गस्तु पुनः इत्यादौ सावकाशः। अचः परस्मिन् इत्यतिदेशे त्रिपादी असिद्धा एवेति दीक्षिताः कथयन्ति। अन्ये केचन अप्रत्यस्येति व्यधिकरणषष्ठीं कथयन्ति। भाष्यप्रामाण्यमाधृत्य प्रत्ययस्य यो विसर्जनीयो न भवतीति वैयधिकरण्येनान्वयं वदन्ति। सामानाधिकरण्येनान्वये तु प्रत्ययभिन्नविसर्गस्येति अर्थो भवति। तदा सर्पिः करोति इत्यत्र इसुसोरिति षत्वे सिद्धेऽपि तिष्ठति सर्पिः पिब त्वमुदुकमित्यत्रापि इदुदुपधेति षत्वं स्यात्। यतः इसः प्रत्ययत्वेऽपि तदवयवसिर्गस्य प्रत्ययभिन्नत्वात्।

सिद्धान्ते उणादीनामव्युत्यत्तिपक्षे इदुदुपधेति नित्यं षत्वं स्यात् खलु इति चेत् व्युत्पत्तिपक्षे दोषस्तदवस्थ एव उपधाग्रहणं प्रत्याख्यातं भाष्ये। कैश्चित् नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वमिति व्याख्यानात् कविभिः कृतमित्यादौ न षत्वम्। यतः रामैरित्यादौ इदुपधत्वाभावात् इत्युक्तं तदपास्तम्।

पुंस्कामा मुहुःकामा इत्यत्र इदुदुपधेति षत्वे प्राप्ते वार्तिकेन निषेध उच्यते। वृत्तिकारैः महुस्कामा इति प्रयोगः कृतस्स प्रामादिक इति भावः। मातुः करोतीत्यादौ एकादेशशास्त्रनिमित्तकस्य षत्वं प्रतिषिद्धम्। कस्कादिषुभ्रभ्रातृष्पुत्रशब्दपाठात् ज्ञाप्यते। एकादेशशास्त्रं निमित्तं यस्य उकारस्य ततः परस्येत्यर्थः। एवञ्च इकारोकारोपधो यः शब्दस्तदवयवस्य अप्रत्ययस्य विसर्गस्य इति सूत्रभावः।

**वैयाकरणसिद्धान्तकौमुदी –**

157.द्विस्त्रिश्चतुरिति कृत्वोऽर्थे (8–3–43) –

वैयाकरणसिद्धान्तकौमुद्यां विकल्पेन षत्वविधायकमस्ति विसर्गसन्धिप्रकरणे इदं सूत्रम्।

अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे त्रिचत्वारिंशत्तमं सूत्रम्।

वृत्तिः – कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः परयोः।

द्विष्करोति, द्विः करोति इत्यादि। कृत्वोऽर्थे किम्? – चतुष्कपालः।

व्याख्यानम् – क्रियाभ्यावृत्तिगणने वर्तमानानां द्विस्त्रिश्चतुरिति शब्दानां विसर्गस्य षकारो विकल्पेन भवति कुप्वोः परयोः। यथा – द्विष्करोति, द्विः करोति इति। द्विवारं करोतीत्यर्थः। द्विः करोति इत्यवस्थायां कृत्वोऽर्थे विद्यमानस्य द्विशब्दविसर्गस्य षकारो विकल्पेन भवति करोति इति ककारस्य परकत्वात्। ततः षत्वे द्विष्करोति इति रूपं भवति। तदभावे द्विः करोति इति रूपं सिध्यति। द्विः, त्रिः, चतुः, इति कृत्वोऽर्थे इति पञ्चपदात्मकमिदं सूत्रम्। कृत्वोऽर्थे इति पदाभावे चतुष्कपाल इत्यत्रापि विकल्पेन षत्वं स्यात्। अतः कृत्वोऽर्थे इति उच्यते। अत्र चतुर्षु कपालेषु संस्कृतः पुरोडाश इत्यर्थे इदुदुपधस्येति षत्वं नित्यं भवति।

**बालमनोरमा** –

द्विस्त्रिश्चतुरिति। इतिकरणानन्तरं शब्दानामिति शेषः। विसर्जनीयस्येति कुप्वोरिति अन्यतरस्यामिति इणः ष इति चानुवर्तते। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति कृत्वसुचोऽर्थः। तत्र वर्तमानानां द्विः त्रिः चतुः इति शब्दानां विसर्गस्येत्यन्वयः। तदाह–कृत्वोऽर्थः इत्यादिना। द्विष्करोतीति। द्वित्रिचतुर्भ्यस्सुच् इति कृत्वोऽर्थे सुच्। आदिना त्रिष्करोति, चतुष्करोतीति गृह्यते। सर्वत्र विसर्गस्य प्रत्ययावयवत्वाद् इदुदुपधस्य इत्यप्राप्ते विभाषेयम्। षत्वाभावे कुप्वोरिति जिह्वामूलीयविसर्गौ। कृत्वोऽर्थे यो विसर्ग इति तु न व्याख्यातम् तथा सति चतुष्करोतीत्यत्र अव्याप्तेः, चतुशब्दे सुचः संयोगान्तलोपेन विसर्गस्य तत्र प्रातिपदिकायवत्वात्। चतुष्कपाल इति। चतुर्षु कपालेषु संस्कृतः पुरोडाश इत्यर्थे संस्कृतं भक्षाः इत्यणि विवक्षिते तद्धितार्थोत्तरपदसमाहारे च इति समासः। द्विगोर्लुगनपत्ये इत्यणो लुक्। अत्र चतुश्शब्दस्य कृत्वोऽर्थे अवृत्तेर्न तद्विसर्गस्य षत्वविकल्पः, किं तु इदुदुपधस्य इति नित्यमेव षत्वम्। ननु तत्र प्रत्ययावयवभिन्नस्येति व्याख्याने चतेरुन् इत्यौणादिकप्रत्ययावयवत्वाद् विसर्गस्य कथमिह इदुदुपधस्य इति नित्यं षत्वम्। अतस्तत्र प्रत्ययभिन्नस्येत्येव व्याख्यानमुचितम्। एवं चात्र चतुश्शब्दविसर्गस्य प्रत्ययत्वाभावाद् इदुदुपधस्य इति नित्यषत्वं निर्बाधं भविष्यतीति चेत् नैष दोषः। कविभिः□कृतमित्यादौ षत्ववारणाय प्रत्ययावयवभिन्न–स्येत्येव व्याख्यातुमुचितत्वात्। चतुशबदस्तु अव्युत्पन्न एव। अतः प्रत्ययावयवभिन्नस्येति पर्युदासस्तत्र न भवति, 'चतुष्पाद्भ्यो ढञ्' इत्यादिनिर्देशबलेन चतुश्शब्दे अव्युत्पत्तिपक्षस्यैवाङ्गीकार्यत्वात्। द्विनामा त्रिनामा च कश्चित्। द्विः करोति, त्रिः करोति। अत्रापि न षत्वम्, कृत्वोऽर्थे अवृत्तेः।

**अयं भाावः** –

द्विरित्यादीनां शब्दानां विसर्गस्य षो वा स्यात्कुप्वोः परयोः इति सूत्रार्थः। विसर्गस्य प्रत्ययावयवत्वात् इदुदुपधेति सूत्रेणाप्राप्तौ अनेन विकल्पेन विधीयते। षत्वाभावे जिह्वामूलीयविसर्गौ। कृत्वोऽर्थे यो विसर्गस्तस्येति न व्याख्यायि। अपि तु कृत्वोऽर्थे विद्यमानानां द्विरित्यादीनां विसर्गस्य ष इत्युक्तम्। अन्यथा चतुष्करोति इत्यत्र षत्वं न स्यात्। यतः चतुश्शब्दे सुचः संयोगान्तलोपेन विसर्गस्य तत्र प्रातिपदिकावयवत्वात् न तु प्रत्ययावयवत्वात्। चतुश्शब्दोऽव्युत्पन्न एव। अतः प्रत्ययावयवभिन्नत्वात् इदुदुपधेति षत्वं नित्यं भवत्येव। यत्र द्विः इति कस्यचिन्नाम वर्तते। तत्र द्विः करोति इत्यत्र न षत्वम्। कृत्वोऽर्थे अविद्यमानत्वात्।

**तत्त्वबोधिनी** –

द्विस्त्रिश्चतुरिति। इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोऽर्थग्रहणं तु साहाचर्यं न सर्वत्र व्यवस्थापकम् इत्यत्र ज्ञापकम्। तेन दीधीवेवीटाम् इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम्। चतुष्कपाल इति। चतुर्षु कपालेषु संस्कृत इत्यर्थे संस्कृतं भक्षा इत्यणो द्विगोर्लुगनपत्ये इति लुक्। अत्र मनोरमायाम् इदुदुपधस्य इति नित्यं ष इत्युक्तम्। एवञ्च द्वितं त्रितमिति चतुः पञ्चाशत् इति स्वमूलग्रन्थे प्रयोगश्चिन्त्यः स्यात्। चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेः। अतोऽत्र षत्वनिवारणाय अप्रत्ययस्य इत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थः एव स्वीकर्तव्यः। चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिरित्याहुः।

**अयं भावः –**

सुजन्तद्वित्रिशब्दसाहचर्यात् चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। सूत्रे कृत्वोऽर्थग्रहणं 'साहचर्यं सर्वत्र व्यवस्थापकं न भवति' इति ज्ञापयति। तस्य प्रयोजनं तु दीधीवेवीटाम् इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम्। मनोरमायां तावत् द्वितं त्रितं चतुःपञ्चाशत् इति प्रयोगश्चिन्त्य एव । चतुष्कपालवद् अत्रापि प्राप्तेः। अत एतादृशप्रयोगाः चिन्त्या इत्युक्तम्। अप्रत्ययस्य इत्यस्य प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः। चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिः इति वदन्ति मनोरमायामिति भावः।

**प्रौढमनोरमा –**

द्विस्त्रिश्चतुरिति। इति द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुश्शब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोऽर्थग्रहणं ज्ञापकम्। साहचर्यं न सर्वत्र व्यवस्थापकमिति। तेन दीधीवेवीटाम् इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम्। उभयत्र विभाषा चेयम्। चतुरित्यस्य इदुदुपधस्य इति प्राप्ते इतरयोस्त्वप्राप्ते। न च तयोरपि 'इसुसोः सामर्थ्ये' इत्यनेन सिद्धिः शङ्क्या। इसः प्रत्ययस्य अथर्वतश्च तत्र ग्रहणात्। चतुष्कपाल इति। इदुदुपधस्य इति नित्यं षः।

**अयं भावः –**

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमिति परिभाषया द्विः, त्रिः इति सुजन्तत्वादनयोः चतुरपि सुजन्त एव ग्रहीष्यते। सूत्रे कृत्वोऽर्थग्रहणं 'साहचर्यं न सर्वत्र व्यवस्थापकमिति विषयं ज्ञापयति। तस्य प्रयोजनं तावद् दीधीवेवीटाम् इत्यत्र दीधीवेव्योः धात्वोः साहचर्येऽपि इट आगमस्यैव ग्रहणम्।

प्राप्ताप्रातविभाषा अनेन विधीयते। चतुरित्यत्र इदुदुपधस्येति सूत्रेण प्राप्तेऽनेन विकल्पेन विधीयते। द्वित्रिशब्दविषयेऽप्राप्ते विकल्पेनानेन विधीयते। ननु द्विरित्यादौ इसुसोः सतोः 'इसुसोः सामर्थ्ये' सूत्रेण कुतो न षत्वम्? इत्युक्ते तत्र सूत्रे इसुसोरर्थवतोर्ग्रहणं कृतम्। अत्र द्विरित्यादौ इसुसावनर्थकौ। चतुष्कपाल इत्यत्र तु इदुदुपधेति नित्यं षः। कृत्वोऽर्थे प्रयोगाभावात् नानेन वा इति भावः।

**लघुशब्देन्दुशेखरः –**

द्विस्त्रि।। कृत्वोऽर्थ इति न विसर्गविशेषणं चतुशब्देऽसम्भवात्। किन्तु द्विरादीनामित्याह। वर्तमानानामेषामिति। इसुसोरिति सूत्रे वक्ष्यमाणरीत्या सुच इति सूत्रयितुमुचितम्। सुजन्तान्तस्य पदस्येत्यर्थात्। चतुष्कपाल इति। इदुदुपधस्येति नित्यं षः। चतुशब्दोऽव्युत्पन्न इति अप्रत्ययस्येति

पर्युदासोन। अत एव चतुष्पाद्भ्यो ढञ् इत्यादिनिर्देशाः सङ्गच्छन्ते। चतुष्पञ्चाशदित्यत्रापि षत्वं भवत्येव। न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्रषत्वमिति वाच्यम्। विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात्। अत एव समः सुटि इति सूत्रभाष्ये सम्पुङ्कानामित्यनेन सविधिरेवास्त्वित्याशङ्क्य पुंस्कामेत्यत्र षत्वापादनं सङ्गच्छते। न च कृत्वोऽर्थ इत्येव कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थान्न पञ्चकृत्वः करोतीत्यादौ दोषो नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम्' कृत्वोऽर्थे इत्यस्यासिद्धत्वेन चतुश्शब्दे इदुदुपधस्येति नित्यषत्वापत्तेः। प्रकरणे प्रकरणमसिद्धमिति पक्षस्तु उपसर्गादसमासेऽपि इति सूत्रे कैयटे पूर्वपदात् इति सूत्रे भाष्ये च दूषित एव। उपसर्गादिति सूत्रे चोपपादयिष्यते। किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणेऽव्यवहितप्रकरणे एव त्रिपाद्या असिद्धत्वं स्यात्, न सम्पूर्णसपादसप्ताध्याय्याम्। किं चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः।

**अयं भावः –**

चतुश्शब्दात् कृत्वोऽर्थे द्वित्रिचतुर्भ्यस्सुजिति सूत्रेण सुच्प्रत्यये रात्सस्येति सुचो लोपे चतुरिति रेफस्य विसर्गे तस्य कृत्वोऽर्थसम्बन्धित्वाभावेन सूत्रे कृत्वोऽर्थ इति विशेषणं न विसर्गस्य चतुश्शब्दविषयेऽसम्भवात्। परन्तु द्विरादीनां युज्यते। द्विस्त्रिश्चतुरिति स्थाने सुच इत्येव सूत्रयितुमुचितम्। यतः सुचः प्रत्ययग्रहणपरिभाषया सुजन्तस्य लाभे द्विष्करोतीत्यादौ षत्वे सिद्धे ततः सुजन्तान्तस्य पदस्येति विशेषणत्वे तदन्तविधौ सुजन्तान्तस्य पदस्येत्यर्थलाभे च परमद्विष्करोतीत्यादौ षत्वं सिध्यति। ननु चतुश्शब्दस्य चतेरुरन्निति औणादिकप्रत्ययान्ततया अप्रत्ययस्येति निषेधात् कथं षत्वं स्यादिति जिज्ञासायां प्रोच्यते – चतुश्शब्दोऽव्युत्पन्न इति। अत एव चतुष्पादो गर्भिण्या इत्यादिषत्वसहितनिर्देशाः सङ्गच्छन्ते। चतुष्कपाल इत्यत्र तु इदुदुपधस्येति नित्यं षः। चतुष्पञ्चाशदित्यत्रापि इदुदुपधेति षत्वम्।

ननु द्विस्त्रिश्चतुरिति मास्तु। कृत्वोऽर्थे इत्येव सूत्रमस्तु। पदस्येत्यधिक्रियते। इदुदुपधस्येत्यनुवर्तते। कृत्वोऽर्थे विद्यमानस्य इदुदुपधस्य पदस्य यो विसर्गः तस्य षत्वमित्यर्थलाभेन पञ्चकृत्वः करोतीत्यादौ इदुदुपधत्वाभावेन नातिव्याप्तिः। चतुष्करोतीत्यत्र नाव्याप्तिः। कृत्वोऽर्थे विद्यमानस्य इदुदुपधस्य पदत्वाभावादिति शङ्कते न चेति। समाधत्ते कृत्वोऽर्थे इति। तथा न्यासे द्विष्करोति त्रिष्करोतीत्यत्र विसर्गस्य प्रत्ययसम्बन्धित्वेन इदुदुपधस्येत्यस्याप्रवृत्त्या तत्र सूत्रस्य चारितार्थ्योन चतुष्करोतीत्यत्र इदुदुपधस्यैतदद्दृष्ट्या कृत्वोऽर्थे इत्यस्यासिद्धत्वेन नित्यषत्वापत्तिरिति भावः।

**काशिकावृत्तिः –**

ष इति सम्बध्यते। द्विस्, त्रिस्, चतुर् इत्येतोषां कृत्वोऽर्थे वर्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वोः परतः। द्विष्करोति/द्विःकरोति। त्रिष्करोति/ त्रिःकरोति। चतुष्करोति/चतुःकरोति। द्विष्पचति/द्विःपचति। त्रिष्पचति/त्रिःपचति। चतुष्पचति/चतुःपचति। कृत्वोऽर्थ इति किम्?। चतुष्कपालम्, चतुष्कण्टकम्, पूर्वेण नित्यं षत्वं भवति। इदुदुपधस्य इत्यस्यानुवृत्तौ सत्यां कृत्वोऽर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे द्विस्त्रिश्चतुरिति शक्यमकर्तुम्।

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा[3]।
षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण।। 1।।

सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि।।2।।

एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्।
अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति।।3।।

अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत।
चतुरो न सिध्यति तथा रेफस्य विसर्जनीयो हि।।4।।

तस्मिंस्तु क्रियमाणे वक्तुं चतुरो विशेषणं भवति।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम्।।5।।

एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुश्शब्दस्य कृत्वोऽर्थेऽपि वर्तमानस्य पूर्वेणैव नित्यं षत्वं स्यात्। पूर्वत्रासिद्धे नास्ति प्रतिषेधोऽभावादुत्तरस्य।

**अयं भावः –**

कृत्वोऽर्थे विद्यमानानां द्विस्, त्रिस्, चतुर्, एतेषां विसर्गस्य षकारो विकल्पेन भवति कुप्वोः परयोः। चतुष्कपालमित्यत्र चतुश्शब्दस्य कृत्वोऽर्थकत्वाभावादनेन वा न षत्वम्। अपि तु इददपधेति नित्यं षत्वम्। द्विस्त्रिश्चतुरिति अकर्तुं शक्यम्। केवलं कृत्वोऽर्थे इत्युच्यमाने इदुदुपधस्येति अनुवृत्तौ द्विरादीनां षत्वे सिद्धे द्विरादीनां ग्रहणं कर्तुमशक्यमिति भावः।

**महाभाष्यम् –**

द्विस्त्रिश्चतुरितिग्रहणं किमर्थम्? इह मा भूत् – पञ्चकृत्वः करोति। अथ कृत्वोऽर्थग्रहणं किमर्थम्? इह मा भूत् – चतुष्कपालः, चतुष्कण्टक इति। नैतदस्ति। अस्त्वनेन विभाषा, पूर्वेण नित्यो विधिर्भविष्यति। नाप्राप्ते पूर्वेणेयं विभाषाऽरभ्यते, सा यथैवेह बाधिका भवति चतुःकरोति, चतुष्करोतीत्येवं चतुष्कपालेऽपि बाधिका स्यात्। नात्र पूर्वेण षत्वं प्राप्नोति। किं कारणम्? अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायम्। लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति। तस्मात्कृत्वोऽर्थग्रहणं कर्तव्यम्। द्विस्त्रिश्चतुर्गहणं शक्यमवक्तुम्। कस्मान्न भवति पञ्चकृत्वः करोतीति। इदुदुपधस्येति वर्तते। नैवं शक्यम्, अक्रियमाणे द्वित्रिचतुर्ग्रहणे कृत्वोऽर्थग्रहणेन विसर्जनीयो विशेष्येत। तत्र को दोषः? इहैव स्यात् द्विष्करोति, द्विःकरोति। त्रिष्करोति, त्रिःकरोतीति। इह न स्याच्चतुः करोति, चतुष्करोतीति। द्वित्रिचतुर्ग्रहणे पुन क्रियमाणे कृत्वोऽर्थग्रहणेन द्वित्रिचतुरो विशेष्यन्ते। द्विस्त्रिश्चतुर्णां कृत्वोऽर्थे वर्तमानानां यो विसर्जनीय इति। एतदपि नास्ति प्रयोजनं पदस्येति वर्तते। तत्कृत्वोऽर्थग्रहणेन विशेषयिष्यामः – पदस्य कृत्वोऽर्थे वर्तमानस्य यो विसर्जनीय इति।

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा।
षत्वं विभाषयाऽभून्ननु सिद्धं तत्र पूर्वेण।।1।।

सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि।।2।।

एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्।
अन्यो हि नेदुदुपधः कृत्वोऽर्थे कश्चिदव्यस्ति।।3।।

अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि।।4।।

तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम्।।5।।

**अयं भावः –**

पञ्चकृत्वः करोतीत्यादौ सत्ववारणाय द्विस्त्रिश्चतुरितिग्रहणं कृतम्। चतुष्कपाल इत्यादौ वा षत्ववारणार्थं कृत्वोऽर्थग्रहणं कृतम्। एवं न वक्तव्यम्। अपि तु इदुदुपधेति नित्ये प्राप्ते अनेन विभाषा आरभ्यते। कृत्वोऽर्थग्रहणाभावे यथा चतुःकरोति, चतुष्करोतीति विभाषा भवति तथैव चतुष्कपाल इत्यपि विभाषा स्यात्, तन्निवारणाय कृत्वोऽर्थग्रहणं कृतम्। द्विरादीनां ग्रहणाभावेऽपि इष्टसिद्धिः भवति। कुतश्चेत् इदुदुपधस्य कृत्वोऽर्थे विद्यमानस्य विसर्गस्य षो वा स्यादित्यर्थेन। एवं नैव शक्यम्। यतः चतुश्शब्दे तदभावात्। द्विरादीनां ग्रहणे क्रियमाणे द्विरादीनां कृत्वोऽर्थे विद्यमानानां यो विसर्जनीय इत्यर्थो भवति। एवमपि नास्ति प्रयोजनमित्युच्यते। पदस्येति वर्तते। तदा पदस्य कृत्वोऽर्थे वर्तमानस्य यो विसर्जनीय इति कथनेन वा षत्वं सिध्यति। द्विरादीनामग्रहणं कर्तुं शक्यत इति भावः।

**प्रदीपः –**

द्विस्त्रिश्चतुर्ग्रहणमिति। वक्ष्यमाणेनाभिप्रायेण दूषणार्थः प्रश्नः। इतरस्त्वगृहीताभिप्रायः प्रत्युदाहरति–पञ्चकृत्व इति। अत्र सकारः प्रसज्येत। अथेति। द्विस्त्रिशब्दौ कृत्वोऽर्थाविवेति प्रश्नः। इतरश्चतुःशब्दार्थमेतद्विशेषणमित्याह – चतुष्कपाल इति इदुदुपधस्येति नित्यं षत्वं भवति, अव्युत्पन्नत्वादुणादीनामप्रत्ययविसर्जनीयत्वात्। यदा तु साहचर्यं व्यवस्थाहेतुत्वेनाश्रीयते तदा चतुःशब्दार्थमपि कृत्वोऽर्थग्रहणं न कर्तव्यम्। प्रत्ययविसर्जनीय इति। सकारस्य सत्वे कृते पूर्वस्य रोरीति लोप क्रियत इति भावः। लुप्यत इति। रात्सस्येति लोपे कर्तव्ये रुत्वस्यासिद्धत्वात्। रोरीति लोपे च ढ्रलोप इति दीर्घप्रसङ्गः। द्विस्त्रिश्चतुर इति। चतुशब्दः सुजन्तानुकरणमिति प्रकृतावेवाऽदृष्टत्वादाम्न कृतः। द्वित्रिश्चतुर्णामित्यत्र त्वसुजन्तानुकरणत्वान्नुट् कृतः। पदस्य कृत्वोऽर्थ इति। ननु पूर्वत्रासिद्धमिति विकल्पस्यासिद्धत्वाच्चतुष्करोतीति नित्यं षत्वप्रसङ्गः। नैष दोषः। प्रकरणे प्रकाणमसिद्धं न तु योगे इत्युक्तत्वात्। अथवा इदुदुपधस्य कृत्वोऽर्थवृत्तेर्नाप्राप्ते नित्ये षत्वेऽस्यारम्भादस्याऽपवादत्वमित्यपवादो वचनप्रामाण्यान्नासिद्धो भवति।

**अयं भावः –**

सूत्रे द्विरादिग्रहणाभावे पञ्चकृत्वः करोति इत्यत्र सकारः प्रसज्येत। द्विः त्रिः इति शब्दौ सर्वदा कृत्वार्थावेव भवतः। तर्हि कृत्वोऽर्थग्रहणेन किं प्रयोजनमिति प्रश्ने चतुश्शब्दः केवलं कृत्वोऽर्थे नास्ति। अपि तु चतुष्कपाल इत्यादौ इतरार्थे विद्यते। अत्र मा भूदित्यर्थं कृत्वोऽर्थग्रहणं कृतम्। यदा साहचर्यं व्यवस्थापकं तदा कृत्वोऽर्थग्रहणं नावश्यकम्। ननु पूर्वत्रासिद्धमिति नियमेन विकल्पस्यासिद्धत्वात् इदुदुपधेति चतुष्करोतीत्यादौ नित्यं षत्वप्रसङ्गः खल्विति चेत् नैष दोषः। प्रकरणे प्रकरणमसिद्धं न तु योगे इत्युक्तत्वात्। प्रकरणस्यासिद्धत्वं द्रष्टव्यं न तु योगे चोगस्य। अथवा इदुदुपधस्य कृत्वोऽर्थवृत्तेः अवश्यं प्राप्ते नित्ये षत्वे प्राप्ते अस्यारम्भस्यापवादत्वात् अपवादः वचनप्रामाण्यात् असिद्धो न भवति इति भावः।

**उद्योतनम्** –

भाष्ये पूर्वेण इदुदुपधस्य च इत्यनेन। ननु चेतेरुरन् इति चतुष्कपाल इत्यत्र प्रत्ययविसर्जनीयत्वात् इदुदुपधस्य इति कथं नित्यं षत्वम् अत आह – अव्युत्पन्नत्वादिति। कृत्वोऽर्थद्विस्त्रिस्साहचर्यात् चतुश्शब्दोऽपि तदर्थ एव गृह्यत इति चतुष्कपाले षत्वविकल्पाभावात् कृत्वोऽर्थग्रहणं न कर्तव्यमित्याह–यदा त्विति। चतुः करोति, चतुष्करोति इत्यत्र पूर्वेण षत्वे नित्ये प्राप्तेऽनेन विकल्प इति यदुक्तं तदाक्षेपार्थम् नात्र इति भाष्यम्। तत्र सुच्प्रत्ययस्य रात्सस्य इति लोपात् कथं प्रत्यविसर्जनीयोऽयम्, अत आह – सकारस्येति। रो रि इति लोपेऽनिष्टमप्याह – रो रीति। ननु प्रकृतिवदनुकरणम् इत्यनुकरणेऽप्यामा भाव्यमिति चतुर इति निर्देशः कथम्? अत आह – चतुश्शब्द इति। तर्हि नुडपि न स्यात्, अत आह–द्विस्त्रिश्चतुर्णामिति। नैष इति। उभयत्रापि षत्वस्य विधेयत्वादेकप्रकरणत्वम्। ननु पूर्वेणैव षत्वे सिद्धेऽनेन पक्षे तदभावो विधीयत इति विधेयभेदात् प्रकरणभेद एव, अत आह–अथवेति।

**अयं भावः** –

चतुश्शब्दस्याव्युत्पन्नत्वात् कृत्वोऽर्थद्विस्त्रिस्साहचर्यात् चतुश्शब्दोऽपि कृत्वोऽर्थ एव गृह्यत इति कारणेन चतुष्कपालशब्देऽनेन षत्वविकल्पाभावात् कृत्वोऽर्थग्रहणं न कर्तव्यमिति आशयः। चतुः करोतीत्यादौ इदुदुपधेति सूत्रेण नित्ये षत्वे प्राप्तेऽनेन विकल्प इति अयुक्तम्। यतः पूर्वेण अप्रत्ययविसर्गस्य षत्वं विधीयते। चतुः इति विसर्गः प्रत्यय– विसर्गः। अतः पूर्वेण न भवति षत्वम्। अयं प्रत्ययविसर्गः कथमित्युक्ते चतुर् स् इति स्थिते सस्य रुत्वे रोरिति पूर्वरेफलोपे रोर्विसर्गे प्रत्यविसर्गो भवति चतुः इति। एवं चेत् ढ्रलोप इति दीर्घत्वप्रसङ्गः। तथा च रात्सस्येति सलोपे प्रत्ययविसर्गो न भवति। पूर्वेण नित्ये षत्वे प्राप्ते कृत्वोऽर्थग्रहणं कर्तव्यम्। तेन चतुः करोतीत्यादौ विकल्पेन चतुष्कपाल इत्यादौ पूर्वेण नित्यं षत्वं च प्राप्यते इति भावः।

**नारायणीयम्** –

दूषणार्थ इति। द्विस्त्रिश्चतुर्ग्रहणस्यावक्तव्यता प्रतिपादनायेत्यर्थः। इतरस्त्विति।

अभिप्रायस्तु स्पष्टीभविष्यति। अव्युत्पन्नत्वादिति। यद्यपि चतुश्शब्दः चतेरुरन् इति व्युत्पन्नः□ तथाप्युणादीनां व्युत्पत्तिकार्याभावस्य कंसग्रहणेन ज्ञापित्वात् षत्वं भवतीत्यर्थः। यदा तु साहचर्यमिति। द्विस्त्रिश्शब्दयोः कृत्वोऽर्थत्वाव्यभिचारात् तत्साहचर्याच्चतुश्शब्दोऽपि तदर्थवृत्तिर्गृह्यत इति सिद्धम्। तत्र

कृत्वोऽर्थग्रहणेनास्य न्यायस्यानित्यत्वं ज्ञाप्यत इत्याहुः। तेन दीधीवेवीटाम् इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणं सिद्धं भवति। कथं प्रत्ययविसर्जनीयत्वमित्यत्राह–सकारस्येति। चतुर्स् इति स्थिते पूर्वं सकारस्य रुत्वमित्यर्थः। ननु रात्सस्य इति लोपात् परत्वाद्रुत्वं स्यादित्यत्राह – लोपे कर्तव्य इति। तथा चोक्तम्–पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य इति। पूर्वोक्तायां प्रक्रियायां रूपसिद्धिरपि नास्तीत्याह– रोरीति लोप इति। ननु प्रकृतिवदनुकरणं भवति इति चतुश्शब्दान्तस्य अङ्गस्य चतुरनडुहोरामुदात्त इत्यामि द्वित्रिश्चत्वार इति वक्तव्यमित्यत्राह–चतुश्शब्द इति। कथं तर्हि द्विस्त्रिश्चतुर्णाम् इत्यत्र नुट् कृत इत्यत आह – द्विस्त्रिश्चतुर्णामिति। नुटो दर्शनादसुजन्तस्यानुकरणमिति व्याख्यायत इत्यर्थः। विकल्पस्यासिद्धत्वादिति। ततश्च पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य इति परत्वाद्विकल्पो न लभ्यते, प्रत्युत तस्यासिद्धत्वान्नित्यषत्वप्रसङ्ग एवेत्यर्थः। परिहारः स्पष्टः। उक्तार्थसंग्रहाय श्लोकाः – कृत्वसुजर्थ इति। कृत्वसुजर्थे षत्वं ब्रवीति कस्मादिति कृत्वोऽर्थग्रहणस्य किं प्रयोजनमिति प्रश्नः। अत्रोत्तरम् – चतुष्कपाले मां षत्वं विभाषया भूदिति। प्रत्याख्यानवाद्याह–ननु सिद्धं तत्र पूर्वेणेति। पूर्वेण नित्यं षत्वं भविष्यतीत्यर्थः। आरम्भवाद्याह–सिद्धे हीति। यद्यपि चतुष्कपाले पूर्वेण सिद्धम्, तथाप्यसति कृत्वोऽर्थग्रहणे चतुर्शब्दस्य सुजन्तत्वे प्रमाणाभावादसुजन्तस्यापि विभाषा स्यात्। यदा त्वयमाचार्यः कृत्वोऽर्थे चतुरः षत्वं विधत्ते तदा न दोष इति शेषः, सुजन्तस्यैव विकल्पस्य प्रवर्तनात्। ननु नात्र पूर्वेण षत्वं प्राप्नोति प्रत्ययविसर्जनीयत्वादित्यत आह–लुप्त इति। हिशब्दो हेतौ। एवं कृत्वोऽर्थग्रहणं कर्तव्यमिति स्थितम्। एतदुपजीवनेन द्विस्त्रिश्चतुर्ग्रहणं प्रत्याचष्टे एवं सतीति। कृत्वोऽर्थग्रहणे स्थिते सतीत्यर्थः। किं कार्यमिति। न किंचित्, अनर्थकमेवेत्यर्थः। कुत इत्यत्राह – अन्यो हीति। आरम्भवादी, असति द्विरादिग्रहणे दोषमाह – अक्रियमाण इति। विसर्जनीयो विशेष्येतेति सम्भावने लिङ्, विसर्जनीयस्यैव कार्यित्वेन प्राधान्याद्विशेष्यत्वं युक्तमित्यर्थः। विसर्जनीयस्य विशेष्यत्वे को दोष इत्यत्राह – चतुरो न सिध्यति तदेति। अनन्तरोक्तविशेषणप्रकार इत्यर्थः। कस्मादित्याह–रेफस्येति। रात्सस्य इति सकारलोपे चतुर्शब्दान्तस्य रेफस्य विसर्जनीयः। स न कृत्वोऽर्थे वर्तत इत्यर्थः। क्रियमाणे तु द्विस्त्रिश्चतुर्ग्रहणे नायं दोष इत्याह–तस्मिंस्त्विति। युक्तं चतुरो विशेषणमिति। इतरयोः कृत्वोऽर्थत्वाव्याभिचारात्। प्रत्याख्यानवाद्याह प्रकृतं पदमिति। विसर्जनीयग्रहणं प्रकृतस्य पदस्य विशेषणत्वेन व्याख्यायते न तु विशेष्यत्वेन। तेन तदन्तविधिः – विसर्जनीयान्तस्य पदस्य षत्वमिति। तत्त्वलोऽन्त्यपरिभाषया विसर्जनीयस्य भवतीत्येतावत्। तदेतदाह–तदन्तमिति। विसर्जनीयान्तमित्यर्थः। तस्मात् पदस्य कार्यित्वात् तस्यैव कृत्वोऽर्थग्रहणं विशेषणं न्याय्यमित्यर्थः। अपिशब्दोऽवधारणे, अनेकार्थत्वान्निपातानाम्। एवं द्विस्त्रिश्चतुर्ग्रहणं प्रत्याख्यातम्।

**अयं भावः –**

चतुश्शब्दस्य अव्युत्पन्नत्वात् पूर्वेण षत्वाभावे सिद्धे साहचर्यनियमेन चतुश्शब्दस्यापि कृत्वोऽर्थकत्वस्यैव स्वीकारे कृत्वोऽर्थग्रहणं साहचर्यनियमम् अनित्यं ज्ञापयति। तेन दीधीवेवीटाम् इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणं सिद्धं भवति। ननु प्रकृतिवदनुकरणं भवति इति नियमेन चतुश्शब्दान्तस्याङ्गस्य चतुरनडुहोरामुदात्त इति आमि कृते द्विस्त्रिश्चत्वार इति वक्तव्यं खलु इति चेत् चतुश्शब्दः सुजन्तस्यानुकरणमिति प्रकृतावेव अदृष्टत्वात् आम् न कृत इति भावः। तर्हि द्विस्त्रिश्चतुर्णामिति कथम् इति चेत् नुटो दर्शनादसुजन्तस्यानुकरणमिति व्याख्यायते इति भावः। चतुष्करोतीत्यादौ 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति नियमात् परत्वात् विकल्पो वक्तुं न शक्यते। परन्तु पूर्वेण नित्यं

षत्वप्रसङ्ग इति चेत् प्रकरणे प्रकरणमसिद्धं न तु योगे इति न्यायेन समाधायि। कृत्वसुजर्थे इत्यादिश्लोकैः उक्तार्थ एव समग्राहि। एवञ्च भाष्ये द्विरादिग्रहणं प्रत्याख्यायिक इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

कृत्वोऽर्थे वृत्तीनामेषां विसर्गस्य षो वा कुप्वोः परयोः। द्विस्त्रिश्चतुर्भ्यः सुच्। द्विष्करोति, द्विः करोति इत्यादि। चतुरित्यस्येति प्राप्तेऽनयोरप्राप्ते विभाषेयम्। ननु द्विस्त्रिरित्येतत्साहचर्यात् चतुरित्यपि सुजन्तं ग्राहिष्यते किं कृत्वोऽर्थग्रहणेनेति चेत्सत्यम्, साहचर्यस्य नियामकत्वमनित्यमिति ज्ञाप्यत्वात्। तेन दीधीवेवीटामित्यत्र धातुसाहचर्येऽपि इडागम एव गृह्यते नत्विट्गताविति धातुरित्यादि सिद्धम्।

भाष्ये तु द्विस्त्रिश्चतुरिति प्रत्याख्यातम्। तथाहि कृत्वोऽर्थे इति तावत्कर्तव्यम्, चतुःकपालादिव्यावृत्त्यर्थम्। न च तत्र इदुदुपधस्येत्येव सिद्धं तस्मिन्नाप्राप्ते आरभ्यमाणेयं विभाषा। यथा चतुष्करोतीत्यादौ तद्बाधते, तथा चतुष्कपालादावपि बाधेतेति प्रसङ्ग– सम्भवात्। न च चतुष्कपाल इत्यत्र प्रत्ययस्यैव विसर्जनीय इति कथं पूर्वेण प्राप्तिरिति वाच्यम्। रात्सस्येति सुचो लोपे चतुर्शब्दरेफस्यैव तत्र विसर्गप्रवृत्तेः। एवं च द्विस्त्रिश्चतुरिति न कर्तव्यम्, संख्याभिन्नात्कृत्वसुचो विध्यभावात्। चतुष्कपाले तु इदुदुपधस्येति नित्यं षत्वमिति दीक्षिताः। तेन द्वितं त्रितमिति। चतुःपञ्चाशदिति कौमुद्यां विसर्गप्रयोगश्चिन्त्यः। चतुष्कपालवत्षत्वस्य दुर्वारत्वादिति केचित्। इदुदुपधस्येत्यनुवृत्त्या पञ्चकृत्वः इत्यादौ प्रसक्त्यभावात्।

ननु कृत्वोऽर्थग्रहणं विसर्गस्यैव विशेषणं स्यादिति द्विस्त्रिरित्यनयोरेव विसर्गस्य षत्वं स्यान्न तु चतुरित्यस्य, रात्सस्येति सुचः सकारस्य लोपे उरन् प्रत्ययरेफस्यैव तत्र विसर्गादेशात् तस्य च कृत्वोऽर्थत्वाभावादिति चेत्, कृत्वोऽर्थे वर्तमानस्य पदस्य यो विसर्जनीय इति व्याख्यानात् तदुक्तम् –

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुःकपाले।
षत्वं विभाषया भून्न तु सिद्धं तत्र पूर्वेण।।

सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे।
अन्यो हि नेदुदुपधः कृत्वोऽर्थे कश्चिदप्यस्ति।।

अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि।।

तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याप्यम्।। इति।

**अयं भावः –**

प्राप्ताप्राप्तविभाषा इयम्। साहचर्यनियमस्यानित्यत्वात् सूत्रे कृत्वोऽर्थग्रहणं कर्तव्यम्। भाष्ये तु द्विरादिग्रहणं प्रत्याख्यायि। कृत्वोऽर्थग्रहणं तु कर्तव्यमेव। अन्यथा चतुःकपालादिरूपाणि अनिष्टानि प्राप्नुवन्ति। तद्व्यावृत्त्यर्थं कृत्वोऽर्थग्रहणं कर्तव्यमिति प्रतिपादितम्। चतुष्करोतीत्यादौ चतुर्स् इति स्थिते रात्सस्येति सुचो लोपे ततो रेफस्यैव विसर्गः। एवं च कृत्वोऽर्थे इति ग्रहणं पर्याप्तं षत्वप्रतिपादनाय।

संख्याभिन्नकृत्वसुचो विध्यभावात् चतुष्कपालादौ अनेन वा षत्वस्य प्राप्तिरेव नास्ति। इदुदुपधस्येत्यनुवृत्त्या पञ्चकृत्व इत्यादौ प्रसक्तिः नास्ति। कृत्वोऽर्थग्रहणं विसर्गस्य विशेषणं न। तथा चेत् चतुरिति विसर्गस्य सुच्स्थानिकत्वाभावात् षत्वं न स्यात्। अतः कृत्वोऽर्थे वर्तमानस्य पदस्य यो विसर्जनीय इति व्याख्यायते। ततश्चतुरित्यादौ न दोष इति भावः।

**वैयाकरणद्धिान्तकौमुदी** –

158. इसुसोः सामर्थ्ये। (8–3–44)– वैयाकरणसिद्धान्तकौमुद्यां विसर्गसन्धिप्रकरणे षत्वविकल्पविधायकं सूत्रमिदं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे चतुश्चत्वारिशत्तमं सूत्रमिदम्।

वृत्तिः – इसुसोर्विसर्गस्य षः स्याद्वा कुप्वोः। सर्पिष्करोति, सर्पिः करोति। धनुष्करोति, धनुः करोति। सामर्थ्यमिह व्यपेक्षा। सामर्थ्ये किम् – तिष्ठतु सर्पिः, पिब त्वमुदकम्।

व्याख्यानम् – व्यपेक्षा सामर्थ्ये सति इसुसोः विसर्गस्य षकारादेशो भवति विकल्पेन कवर्गपवर्गयोः परयोः। उदाहरणम् – सर्पिष्करोति, सर्पिः करोति। सर्पिः करोति इत्यवस्थायां सर्पिः इति इसो विसर्गो वर्तते। अग्रे करोतीति ककारो वर्तते। व्यपेक्षासामर्थ्यमस्ति। अतोऽनेन सूत्रेण विकल्पेन षत्वे सर्पिष्करोति, सर्पिः करोतीति रूपं सिध्यति। सूत्रे सामर्थ्यपदेन व्यपेक्षासामर्थ्यं गृहीतम्। सामर्थ्यपदाभावे तिष्ठतु सर्पिः, पिब त्वमुदकमित्यत्रापि षत्वं स्यात्। अतस्तत्पदं न्यवेशि□।

**बालमनोरमा** –

इणः ष इत्यतः ष इति, कुप्वोरिति, विसर्जनीयस्येति, अन्यतरस्यामिति चानुवर्तते। तदाह–इसुसोर्विसर्गस्येति। सर्पिष्करोतीति। व्युत्पत्तिपक्षे अत्र विसर्गस्य प्रत्ययावयवत्वाद् इदुदुपधस्य–इत्यप्राप्तौ विभाषावचनम्। षत्वाभावपक्षे कुप्वोः – इति जिह्वामूलीयविसर्गौ। धनुष्करोतीत्यत्राप्येवम्। ननु एकार्थीभावलक्षणं सामर्थ्यं वृत्तावेव, न तु वाक्ये इति समर्थसूत्रे भाष्ये कैयटादिषु च स्पष्टम्। एवं च सर्पिष्करोतीति धनुष्करोतीति वाक्ये कथमयं षत्वविकल्प इत्यत आह सामर्थ्यमिह व्यपेक्षेति। विशिष्टा अपेक्षा व्यपेक्षा, पदानामाकाङ्क्षायोग्यतासन्निधिवशाद् यः परस्परान्वयः सा व्यपेक्षा इदं तु सामर्थ्यं वाक्येषु विद्यते। यथा राज्ञः पुरुषोऽश्वश्च, राज्ञो देवदत्तस्य च पुरुष इत्यादौ। एवं च सर्पिष्करोतीत्यादौ एतादृशं व्यपेक्षालक्षणं सामर्थ्यमस्तीति भवत्युदाहरणम्। व्यपेक्षालक्षणमेवात्र सामर्थ्यमाश्रित्य सर्पिष्करोतीति भाष्ये उदाहृतत्वादिति भावः। न च पेचुः काष्ठै, सख्युः कामः, कविभिः□ कृतमित्यादौ षत्वं शङ्क्यम्, अत्र प्रातिपदिकावयवोरेव इसुसोग्रहणात्, नित्यं समास इत्युत्तरसूत्रोदाहरणे तयोरेव सम्भवेनार्थाधिकाराश्रयणात् साहचर्याच्च। तिष्ठत्विति। तिष्ठतु सर्पिरित्येकं वाक्यम्। पिब त्वमुदकमित्यन्यत्। तत्र सर्पिरित्यस्य पिब इत्यत्रान्वयाभावान्न सामर्थ्यम्। अतो नायमत्र षत्वविकल्पः। नापि इदुदुपधस्य – इति नित्यं षत्वम्, प्रत्ययावयवत्वात्। अत एव प्रत्ययभिन्नस्य विसर्गस्येति व्याख्यानं नाश्रितम। तथा सति तिष्ठतु सर्पिः, पिब त्वमुदकमित्यत्र विसर्गस्य प्रत्ययैकदेशस्य प्रत्ययभिन्नतया इदुदुपधस्य... इति षत्वापत्तेः।

**अयं भावः** –

सर्पिश्शब्दस्य व्युत्पत्तिपक्षे निसर्गस्य प्रत्ययावयवत्वात् इदुदुपधेति सूत्रेणाप्राप्तौ अनेन विभाषा षत्वम्। षत्वाभावपक्षे सर्पिः करोति, सर्पि करोति इति विसर्गजिह्वामूलीयौ भवतः। एकार्थीभावसामर्थ्यं वृत्तावेव। अतः प्रकृते व्यपेक्षाभावसामर्थ्यम्। आकाङ्क्षायोग्यतासन्निधिवशाद् पदानां यः परस्परान्वयः स व्यपेक्षा। भाष्ये एतादृशं सामर्थ्यमाश्रित्यैव उदाहृतम्। तिष्ठतु सर्पिरित्यादौ सामर्थ्याभावान्नेन षत्वविकल्पः। इदुदुपधेति सूत्रेणापि न षत्वं प्रत्ययावयवत्वात्। एवं च इसुसोः सामर्थ्ये सत्येव षत्वमिति भावः।

**लघुशब्देन्दुशेखरः –**

इसुसोः। अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणम्। तेन पेचुः काष्ठैः, सख्युः पाकः, कविभिः□ कृतमित्यादौ षत्वं न। नित्यं समासे इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात् साहचर्याच्च। इसुसन्तपदावयवविसर्गस्येत्यर्थः। पदस्येत्यधिकारात्। न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ षत्वानापत्तिरवयवस्येसुसन्तत्वेऽपि उत्तरपदत्वे च इति निषेधेनापदत्वादिति वाच्यम्। अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तविशेष्यसत्त्वेऽपि शब्दस्य विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया इसुसन्तान्तस्येत्यर्थेनादोषात्। अत एव वनोर च इत्यादौ न दोषः। ब्राह्मणस्य सर्पिष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यम्, तस्यैकार्थीभावसामर्थ्यविषयत्वात्। अधात्वभिहितं समानाधिकरणमसमर्थवत् इत्युक्तेः सर्पिः कालकमित्यादौ न षत्वम्। अधात्वभिहितमित्युक्तेः सर्पिष्पीयते इत्यत्र षत्वसिद्धिः। धातुसहचरितप्रत्याभिहितार्थेन समानाधिकरणमसमर्थवन्नेति तदर्थः। यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपादिकं पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति आयनेयीनी.. इति सूत्रे भाष्ये स्पष्टमुक्तेः। तत्र हि शङ्ख इत्यादावादेशानाशङ्कय 'उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिकविज्ञानाच्च भवगतः पाणिनेः सिद्धम् इत्युक्तम्। अयामन्ताल्वाय्येत्न्विष्णुषु इति सूत्रं व्याकरणान्तररीत्यैव सर्वनामस्थानमिति महासंज्ञावत्। अत एव भाष्ये उणादयोऽव्युत्पन्नानीत्येवोक्तम्, न तु अनेकार्था अपि धातवः इतिवदव्युत्पन्नान्यपीत्युक्तम्, तदा इदुदुपधस्य इति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति प्रत्ययाग्रहणाभावात्तत्परिभाषानुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्पः सिद्धः। नित्यं समासे इति सूत्रमनुत्तरपदस्थस्येति प्रतिषेधार्थम्। नित्यग्रहणं तु न कर्तव्यमेव। समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः। सर्पिषेत्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यदेवेत्यर्थकाद् बहुलग्रहणादिति स्पष्टं भाष्ये। व्यपेक्षेति। व्याख्यानात्। एकार्थीभावसामर्थ्येग्रहणे परमसर्पिःकुण्डिकेत्यादौ समासे विकल्पापत्तिः। अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः।

**अयं भावः –**

सूत्रे इसुसौ प्रातिपदिकावयवौ गृहीतौ। न तु प्रत्ययावयवौ। तेन पेचुः काष्ठैरित्यादौ न षत्वविकल्पप्राप्तिः। नित्यं समासेति उत्तरसूत्रस्योदाहरणे समासविषये प्रातिपदिकावयवयोग्रहणादत्रापि इसुसोः प्रातिपदिकायवयोरेव ग्रहणम्। पदस्येत्यधिकारात् इसुसन्तपदावयववसर्गस्येत्यर्थः वक्तव्यः। परमसर्पिष्करोतीत्यादौ इसुसन्तत्वाभावात्कथं षत्वमिति चेत् प्रत्ययग्रहणपरिभाषया परस्य विशेष्यत्व इसुसोर्विशेषणत्वे इसुसन्तस्य पदस्येत्यर्थो लभ्यते। इसुसन्तस्य विशेषणत्वे पदस्य विशेष्यत्वे येन विधिरिति तदन्तविधौ इसुसन्तान्तस्य पदावयवस्य विसर्गस्य इति कथनेन प्रकृते षत्वं सिध्यति। एवं तदन्तान्तस्वीकारादेव वनो र च इत्यादौ न दोषः। ब्राह्मणस्य सर्पिष्करोतीत्यादौ सर्पिषो

ब्राह्मणसापेक्षत्वेन असामर्थ्यं न आशङ्क्यम्। यतो हि सापेक्षत्वेनासामर्थ्यं तु एकार्थीभावविषयो न तु व्यपेक्षाविषयः। अत्र सूत्रे व्यपेक्षायाः प्रतिपादितत्वात्। ''अधात्वभिहितं समानाधिकरणसमर्थवत्'' इति कथनात् सर्पिः कालकमित्यादौ तत्सत्त्वात् न षत्वम्। सर्पिष्पीयते इत्यत्र तु षत्वं सिध्यति धातुसमानाधिकरणसत्त्वात्। पाणिनिमते उणादिषु अव्युत्पत्तिपक्ष एव स्थितः। परमसर्पिष्करोतीत्यादौ षत्वविकल्पः। नित्यं समासे इति सूत्रमनुत्तरपदस्थस्येति प्रतिषेधार्थम्। नित्यग्रहणं न कर्तव्यम्। समासे नित्यषत्वम् इदुदुपधेत्यनेनैव सिद्धेः। सामर्थ्यमिह व्यपेक्षेति निर्णयो व्याख्यानात्। प्रकृते एकार्थीभावसामर्थ्यस्वीकारे परमसर्पिः कुण्डिकेत्यादौ विकल्पापतिः। अनुत्तरपदस्थस्येति निषेधात् प्रकृते नित्यं समासे–इति न प्रवृत्तिरिति भावः।

**काशिकावृत्तिः –**

ष इति सम्बध्यते। इस्, उस् इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः। सर्पिष्करोति, सर्पिः करोति। यजुष्करोति, यजुः करोति। सामर्थ्ये इति किम्? तिष्ठतु सर्पिः पिब त्वमुदकम्। सामर्थ्यमिह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं वा।

**अयं भावः –**

इसुसोः विसर्गस्य विकल्पेन षकारादेशो भवति व्यपेक्षासामर्थ्ये कुप्वोः परयोः। उदाहरणम् – यजुष्करोति, यजुः करोति इत्यत्र यजुः इति उस् वर्तते। तस्य विसर्गस्यानेन वा षत्वम्। अत्र सामर्थ्ये केवलं व्यपेक्षा एव। न तु एकार्थीभाव उभयं वा। अतः परमसर्पिःकुण्डिका इति रूपं सिध्यति।

एवं च इसुसोः प्रातिपदिकावयवयोः विसर्गस्य षत्वं विकल्पेन भवति व्यपेक्षासामर्थ्ये सति कुप्वोः परयोरिति तात्पर्यम्।

**वैयाकरणसिद्धान्तकौमुदी –**

159.नित्यं समासेऽनुत्तरपदस्थस्य। (8–3–45) – वैयाकरणसिद्धान्तकौमुद्यां विसर्गसन्धिप्रकरणे वर्तते इदं सूत्रं नित्यं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे पञ्चचत्वारिंशत्तमं सूत्रं वर्तते।

वृत्तिः–इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं ष स्यात्कुप्वोः परयोः। सर्पिष्कुण्डिका। अनुत्तरपदस्थस्य इति किम् – परमसर्पिःकुण्डिका। कस्कादिषु सर्पिष्कुण्डिकाशब्दः असमासे व्यपेक्षाविरेहेऽपि षत्वार्थो व्यपेक्षायां नित्यार्थश्च।

व्याख्यानम् – समासे उत्तरपदेऽविद्यमानस्य इसुसोर्विसर्गस्य नित्यं षकारादेशो भवति कुप्वोः परयोः इति सूत्रार्थः। उदाहरणम्–सर्पिष्कुण्डिकेति। सर्पिषकुण्डिकेति षष्ठीतत्पुरुषसमासः। सर्पिः इति इसो विसर्गो वर्तते। स च अनुत्तरपदे वर्तते। अग्रे कुण्डिका इति ककारो वर्तते। अतोऽनेन सूत्रेण नित्यं षकारो भवति। सर्पिष्कुण्डिकेति रूपं सिध्यति। अनुत्तरपदस्थस्य इति किमर्थमुक्तम् इति चेत् परमसर्पिःकुण्डिका इत्यत्र षत्वं न भवेदिति। परमं च सर्पिः परमसर्पिः। तस्य कुण्डिका परमसर्पिःकुण्डिका। अत्र सर्पिः इति पदम् उत्तरपदे वर्तते। अतः अनुत्तरपदस्थपदाभावे अत्रापि षत्वं स्यात् अतस्तत्पदं न्यवेशि। तेन षत्वं न भवति। ननु प्रकृतसूत्रेण सर्पिष्कुण्डिकेति षत्वे सिद्धे पुनः

कस्कादिगणे अस्य शब्दस्य पाठः कृत इत्युक्ते तिष्ठतु सर्पिः, कुण्डिकां पश्येत्यादौ असमासे व्यपेक्षाविरहेऽपि षत्वार्थः। पुनश्च इदं सर्पिः कुण्डिकाया इत्यत्र व्यपेक्षायाम् इदं सर्पिष्कुण्डिकाया इति नित्यं षत्वार्थः कस्कादिगणे पुनः सर्पिष्कुण्डिकापाठः कृत इति भावः। एतादृशसन्दर्भे पूर्वेण केनापि सूत्रेण षत्वाभावे षत्वार्थः कस्कादिषु पाठ इति तात्पर्यम्।

**बालमनोरमा –**

नित्यं समासे। इसुसोरित्यनुवर्तते कुप्वोरिति, विसर्जनीयस्येति च। तदाह–इसुसोरित्यादिना। सर्पिष्कुण्डिकेति। सर्पिषः कुण्डिकेति विग्रहः। समासे व्यपेक्षालक्षणसामर्थ्यस्यापि सत्त्वाद् इसुसोः सामर्थ्ये इति षत्वविकल्पे प्राप्ते वचनमिदम्। परमसर्पिःकुण्डिकेति। अत्र विसर्गस्य उत्तरपदस्थत्वान्न षत्वम्। इदुदुपधस्य इति षत्वं तु न, विसर्गस्यात्र प्रत्ययावयवत्वात्। प्रत्ययभिन्नस्य विसर्गस्येति व्याख्याने तु अत्रापि इदुदुपधस्य इति षत्वं स्यात्, अत्र विसर्गस्य प्रत्ययैकदेशतया प्रत्यभिन्नत्वात्। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह – कस्कादिष्विति। व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिः, कुण्डिकां पश्येत्यादावित्यर्थः। अत्र चासमासत्वाद् 'नित्यं समास' इति न भवति। सामर्थ्याभावाच्च 'इसुसोः सामर्थ्ये' इति च न भवति। प्रत्ययावयवत्वाद् इदुदुपधस्य इत्यपि न भवति। अतस्तत्र षत्वप्राप्त्यर्थं कस्कादिषु पाठ इति भावः। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। तत्र इसुसोस्सामर्थ्ये इति विकल्पप्राप्तौ नित्यषत्वार्थः कस्कादौ पाठ इति भावः।

**अयं भावः –**

इसुसोरिति सूत्रेण विकल्पेन षत्वे प्राप्ते नित्यार्थमिदं वचनं समासे। परमसर्पिः कुण्डिकेत्यत्र विसर्गः उत्तरपदस्थः। अतो न षत्वमनेन। अप्रत्ययस्येत्यत्र प्रत्ययभिन्नस्य विसर्गस्येति व्याख्याने तु अत्रापि षत्वं भवेत्। प्रकृतसूत्रेण षत्वे सिद्धे पुनः कस्कादिषु सर्पिष्कुण्डिकापाठः तिष्ठतु सर्पिः, कुण्डिकां पश्येत्यसामर्थ्येऽपि षत्वं यथा स्यात्। तथा च व्यपेक्षायां नित्यं षत्वं यथा स्यात् इति भावः।

**तत्त्वबोधिनी –**

व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। अत्र सर्पिरित्यसमस्तं पदमिति बोध्यम्। समासे तु नित्यं समासे... इत्यनेन सिद्धे समासाभावमेव ज्ञापयितुमिदमिति सर्पिर्विशेषणमुक्तम्। नित्यार्थश्चेति। अयं भावः। असमासे व्यपेक्षाविरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठः। व्यपेक्षायां त्वसमासे इसुसो... इति विकल्पेन प्राप्तौ नित्यार्थ इति।

**अयं भावः –**

तिष्ठतु सर्पिः, कुण्डिकामानय इति असमासेऽसामर्थ्यम्। व्यपेक्षासामर्थ्यं नास्ति इति भावः। तथापि षत्वं कस्कादिपाठात्। इदं सर्पिः कुण्डिकाया इत्यत्र व्यपेक्षासामर्थ्यामस्ति। अत्र नित्यं षत्वं कस्कादिपाठात्। एवं तात्पर्यमिदं भवति यत् असमासे व्यपेक्षासामथ्याभावेऽपि केनापि षत्वाप्राप्तौ नित्यं

षत्वम्। यथा – तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादि। व्यपेक्षायां तु असामासे इसुसोरिति विकल्पेन प्राप्तौ नित्यं षत्वम्। यथा – इदं सर्पिष्कुण्डिकाया इति भावः।

**प्रौढमनोरमा** –

व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। यत्तु पारायणिका आहुः – कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थ इति। तद्भाष्यविरोधादुपेक्ष्यम्।

**अयं भावः** –

तिष्ठत्वित्यादौ व्यपेक्षाविरहेपि षत्वार्थः व्यपेक्षायां नित्यार्थश्च षत्वार्थ कस्कादिषु सर्पिष्कुण्डिकापाठ इति आशयः। केचन पारायणिकाः कथयन्ति यत् कस्कादिषु सर्पिष्कुण्डिकादिपाठ उत्तरपदस्थत्वेऽपि इसुसोर्विसर्गस्य षत्वार्थ इति। परं तद्भाष्यविरोधान्नादरणीयम् इति भावः।

**लघुशब्देन्दुशेरखरः** –

नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह। कस्कादिष्विति। एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमित्यपास्तम्। व्यपेक्षाविरहेऽपीति। आनय सर्पिष्कुण्डिका तिष्ठतीत्यादौ। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्र। प्रत्ययभिन्नविसर्गस्येत्यर्थम् – इदुदुपधस्य इत्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मतेऽव्यपेक्षायां तेन सिद्धेरिति भावः। एतेन कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित इत्यपास्तम्। प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोध्यम्।

**अयं भावः** –

नित्यं समासेति सूत्रेणैव सर्पिष्कुण्डिकाशब्दे षत्वे सिद्धे पुनः कस्कादिषु पाठः असमासे व्यपेक्षाविरहेऽपि षत्वार्थः व्यपेक्षायां तु नित्यार्थ इति। एतेन असमासे चारितार्थ्येन 'कस्कादिषु सर्पिष्कुण्डिकापाठसामर्थ्यात् उत्तरपदस्थस्यापि षत्वम् इति तिरस्कृतम्। आनय सर्पिष्कुण्डिका तिष्ठतीत्पादौ असमासः व्यपेक्षाविरहश्च। तथापि षत्वम्। इदं सर्पिष्कुण्डिकाया इत्यत्र व्यपेक्षा असमासश्च। तथापि नित्यं षत्वम्। एतदुभयं सिध्यति कस्कादिषु तत्पाठात्। प्रत्ययसमबन्धिभिन्नविसर्गस्य इत्यर्थे इदुदुपधेत्यस्याप्राप्तिरेव। व्यपेक्षायाम् 'इसुसोः सामर्थ्ये' इति विकल्पेनैव षत्वमिति भावः।

**काशिकावृत्तिः** –

इसुसोः इति वर्तते। समासविषये इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यं षत्वं भवति कुप्वोः परतः। सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम्। अनुत्तरपदस्थस्येति किम्? परमसर्पिः कुण्डिका। परमधनुःकपालम्। पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति। एतदेव अनुत्तरपदस्थस्य इति वचनं ज्ञापकम् – इसुसोः 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः इत्ययं नियमो न भवति। तेन वाक्येऽपि परमसर्पिष्करोति, परमसर्पिः करोति, इसुसोः सामर्थ्ये इत्येतद् भवति। व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति।

**अयं भावः –**

समासविषये उत्तरपदेऽविद्यमानस्य इसुसोः विसर्गस्य नित्यं षत्वं भवति कुप्वोः परयोरिति सूत्रार्थः। धनुष्कपालादिकमुदाहरणम्। परमसर्पिःकुण्डिकेत्यादौ इसुसोः सामर्थ्ये इति सूत्रेण विकल्पेन षत्वे भवति। अनुत्तरपदस्थाभावे नित्यं षत्वं स्यात् इति भावः।

**महभाष्यम् –**

अनुत्तरपदस्थस्येति किमर्थम्? परमसर्पिःकुण्डिका। अथेदानीमनेन मुक्ते पूर्वेण

षत्वं विभाषा कस्मान्न भवति – इसुसोः सामर्थ्ये इति।
नाना पदार्थयोर्वर्तमानयोः ख्यायते यदा योगः।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह।।1।।

व्यपेक्षासामर्थ्ये पूर्वयोगो न चात्र व्यपेक्षासामर्थ्यम्। किं पुनः कारणं (पूर्वस्मिन् योगे) व्यपेक्षासामर्थ्यमाश्रीयते न पुनरेकर्थीभावो, यथान्यत्र।

ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत।

ऐकार्थ्ये सामर्थ्ये सति वाक्ये षत्वं न स्यात् – सर्पिष्करोति, सर्पिः करोतीति।

तस्मादिह व्यपेक्षासमर्थ्यं साधु मन्यन्ते।

अथ[4] चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः।।

यदि कृदन्तमेतत्ततोऽधिकस्य षत्वं न प्राप्नोति। किं कारणम्? प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति। वाक्येऽपि तर्हि न प्राप्नोति परमसर्पिष्करोति, परमसर्पिः करोतीति।

"वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत" यदयमनुत्तरपदस्थस्येति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवति वाक्ये विभाषेति। अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम्। अथाव्युत्पन्नं प्रातिपदिकं ततो नित्ये षत्वे प्राप्ते इयं विभाषा आरभ्यते। "सिद्धं च मे समासे" सिद्धं च मे समासे षत्वम्। किमर्थं तर्हीदमुच्यते। "प्रतिषेधार्थस्तु यत्नोऽयम्" प्रतिषेधार्थोऽयं यत्नः। अनुत्तरपदस्थस्येति प्रतिषेधं वक्ष्यामीति।

नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह।।1।।

ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत।
तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते।।2।।

अथ चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः।
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत।।3।।

अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम्।
सिद्धं च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम्।।4।।

**अयं भावः –**

परमसर्पिःकुण्डिकेन्यत्रानेन यदि षत्वं न स्यात् तर्हि इसुसोरिति पूर्वसूत्रेण षत्वं विकल्पेन स्यात्खलु इति चेत् तत्र व्यपेक्षा सामर्थ्ये षत्वमुक्तम्। परमसर्पिरित्यत्र व्यपेक्षासामर्थ्यं नास्ति। अतः षत्वाभावः। ननु पूर्वसूत्रे व्यपेक्षासामर्थ्यमेव कुत आश्रीयते न पुनरेकार्थीभाव इति चेदुच्यते – एकार्थीभावसामर्थ्ये स्वीकृते सति वाक्ये षत्वं न भवति। यथा – सर्पिष्करोति, सर्पिः करोतीत्यादौ। अतः प्रकृते व्यपेक्षासामर्थ्यं स्वीक्रियते व्याख्यानात्। यदि सर्पिरव्युत्पन्नं प्रातिपदिकं तर्हि इदुदुपधेति नित्यषत्वे प्राप्ते इसुसोरिति विभाषा आरभ्यते। इसुसोरिति सूत्रेण व्यपेक्षायां वा षत्वे समासे इदुदुपधेति नित्यषत्वे च सिद्धे नित्यं समासेति सूत्रं किमर्थमिति प्रश्नः? समाधानं तु समासे उत्तरपदस्थस्य विसर्गस्य षत्वनिवृत्त्यर्थं सूत्रमिति। नित्यग्रहणस्यापेक्षा नास्ति। समासेऽनुत्तरपदस्थस्येति प्रतिषेधार्थं सूत्रं पठितव्यम्। एवं च समासग्रहणात् प्रकृतसूत्रे एकार्थीभाव एव। उत्तरपदस्थविसर्गस्य न षत्वमिति भावः।

**प्रदीपः –**

अथेदानीमिति। इह समासग्रहणादेकार्थीभाव एव सामर्थ्यं गृह्यते। पूर्वसूत्रे तु विशेषाश्रयणे प्रमाणाभावाद्द्विविधसामर्थ्यग्रहणस्य न्याय्यत्वादेतद्विधीयमाननित्यषत्वाभावे पूर्वेण विकल्पः प्राप्नोत्येव। नानापदार्थयोरिति। नानाभूतयोः पदार्थयोर्यौ शब्दौ तयोर्यो योगो व्यपेक्षालक्षणः स ख्यायते ज्ञायते न त्वेकार्थीभावो गृह्यते। तस्मिन्निति व्यपेक्षालक्षणे सम्बन्धे इत्यर्थः। तदुक्तमिति। व्यपेक्षालक्षणं सामर्थ्यमाश्रयितुं युक्तं, लक्ष्यानुरोधात्। अथवा पदविधित्वात् समर्थपरिभाषोपस्थानात्सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणाद्विशिष्टसामर्थ्यपरिग्रहः। तच्चेति। व्यपेक्षालक्षणसामर्थ्यमिह परमसर्पिः कुण्डिकेत्यादौ नास्तीति षत्वाभावः। यथाऽन्यत्रेति। समासतद्धितसुब्धातुषु यथैकार्थीभाव आश्रीयते तथेह कस्मान्नाश्रीयत इत्यर्थः। एकार्थ इति। यद्येकार्थीभावलक्षणं सामर्थ्यं पूर्वत्राश्रीयेत तदा वाक्ये षत्वविकल्पो न स्यात्। ननु केवलमैकार्थ्यं पूर्वत्र मा ग्राहि, द्विविधस्य तु सामर्थ्यस्य ग्रहणं कस्मान्न भवति उक्तमत्रोत्तरम्। अथ वेह समासग्रहणाद्गोबलीवर्दन्यायात्पूर्वत्रापेक्षितप्रवृत्तिनिमित्तविशेषः समर्थशब्द आश्रीयते– सम्प्रेक्षितार्थं समर्थमिति। अथ चेदिति। स्यादेतत्। द्विविधस्यापि सामर्थ्यस्य पूर्वत्र ग्रहणे कृत्प्रययोरिसुसोर्ग्रहणात्प्रत्ययग्रहणपरिभाषया परमसर्पिःकुण्डिकेत्यादौ पाक्षिकं षत्वं न भविष्यतीति तदयुक्तम्। परमसर्पिष्करोतीत्यादावपि षत्वाप्रसङ्गात्। वाक्ये चेति। अनुत्तरपदस्थस्येति प्रतिषेधाज्ज्ञापकाद्वाक्ये परमसर्पिष्करोतीत्यादौ षत्वं भविष्यतीत्यर्थः। यदि हि षत्वे प्रत्ययग्रहणपरिभाषोपास्थास्यत, अनुत्तरपदस्थस्येति प्रतिषेधोन व्यधास्यत। केचित्तु नित्यं समास इत्येको योगः, अनुत्तरपदस्थस्येति द्वितीय इति योगविभागेन समासे सर्वा षत्वप्राप्तिरुत्तरपदस्थस्य प्रतिषिध्यत इति वर्णयन्तो द्विविधसामर्थ्याश्रयेऽपि न दोष इत्याहुः। अथ चेदिति। यद्यव्युत्पन्नं सर्पिरादिकं शब्दरूपं संविज्ञानं वाचकं तदाऽप्रत्ययविसर्जनीयत्वादिदुदुपधस्येति नित्ये षत्वे प्राप्ते इसुसोः सामर्थ्ये इत्यनेन विकल्पः क्रियते तत्र प्रत्ययग्रहणाभावात्प्रत्ययग्रहणपरिभाषानुपस्थानात् परमसर्पिष्करोतीत्यादावपि षत्वविकल्पः सिध्यति।

किमर्थमिति। इसुसोः सामर्थ्ये इत्यत्र व्यपेक्षालक्षणसामर्थ्यग्रहणात्समासे इदुदुपधस्येति नित्यं षत्वं सिद्धं तत्किमर्थं नित्यं समास इति सूत्रमिति प्रश्नः। प्रतिषेधार्थ इति। उत्तरपदस्थस्य समासे षत्वनिवृत्त्यर्थं सूत्रमित्यर्थः। नित्यग्रहणं तु न कर्तव्यम्। समासेऽनुत्तरपदस्थस्येति प्रतिषेधार्थं सूत्रं

पठितव्यम्। अव्युत्पत्तिपक्षे त्वाश्रीयमाणे सर्पिषा, यजुषेत्यादि न सिध्यतीति षत्वाय व्युत्पत्तिपक्ष एवे सुसन्तस्याश्रयणीयः।

**अयं भावः –**

प्रकृतसूत्रे समासग्रहणादेकार्थीभाव एव सामर्थ्यं स्वीक्रियते। इसुसोः सूत्रे सामर्थ्यशब्देन द्विविधं सामर्थ्यं गृह्यते। व्यपेक्षासामर्थ्यस्यैव ग्रहणे प्रमाणाभावः। अत एतद्विधीयमाननित्यषत्वाभावे पूर्वेण विकल्पः प्राप्नोत्येवेति भावः। प्रकृतसूत्रे व्यपेक्षासामर्थ्यं गृह्यते लक्ष्यानुरोधात् अथवा इसुसोरिति पदविधित्वात् समर्थपरिभाषयैव द्विविधसामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणात् विशिष्टसामर्थ्यस्य ग्रहणं क्रियते। व्यपेक्षालक्षणसामर्थ्यं परमसर्पिःकुण्डिकेत्यादौ नास्तीति षत्वाभावः। इसुसोस्सूत्रे एकार्थीभावसामर्थ्ये सर्पिष्करोतीत्यादौ षत्वं न स्यात्। अत एव व्यपेक्षां साध्वीं मन्यन्ते। अथ चेदित्यादिभाष्यमयुक्तम्। परमसर्पिष्करोतीत्यादौ षत्वं न भवेत्। अनुत्तरपदस्थस्य इति ज्ञापकाद् वाक्ये परमसर्पिष्करोतीत्यादौ षत्वं भवत्येव। केचन नित्यं समासेत्यत्र योगं विभज्य समासे सर्वां षत्वप्राप्तिं उत्तरपदस्थस्य प्रतिषेधन्ति। तेन इसुसोरित्यत्र द्विविधसामर्थ्येऽपि न कापि हानिरिति वदन्ति। यदा सर्पिरादिकम् अव्युत्पन्नं स्वीक्रियते तदा अप्रत्ययविसर्जनीयत्वाद् इदुदुपधस्येति नित्ये षत्वे प्राप्ते इसुसोरिति विकल्पः सिध्यति परमसर्पिष्करोतीत्यादौ समासे इदुदुपधेति षत्वे सिद्धे पुनः नित्यं समासेति कुत इति चेत् समासे उत्तरपदस्थस्य विसर्गस्य षत्वनिवृत्यर्थं सूत्रमिति आशयः। नित्यग्रहणयस्यावश्यकता नास्ति। समासेऽनुत्तरपदस्थस्येति प्रतिषेधार्थं सूत्रं पठनीयमिति भावः।

**उद्योतम् –**

ननु पूर्वसूत्रस्य वाक्यविषयत्वात् समासे तस्य कथं प्रवृत्तिः, अत आह–इह समासेति। पूर्वसूत्रे सामर्थ्ये इति सामान्यग्रहणाद् व्यपेक्षालक्षणमेकार्थीभावलक्षणं च सामर्थ्यं गृह्यत इति सर्पिष्करोति इत्यत्रेव परमसर्पिःकुण्डिका इत्यत्रापि प्राप्नोतीत्यर्थः। नानाशब्दस्याद्यवयवस्यासत्त्वरूपपृथग्भावप्रतिपादकस्यापि वृत्तौ तद्युक्तद्रव्यपरत्वात् सामानाधिकरण्योपपत्तिरिति वदन् नानापदार्थयोः इत्यस्य सप्तमीत्वमङ्गीकृत्य व्याचष्टे–नानाभूतयोरिति। पूर्वसूत्रे व्यपेक्षालक्षणसामर्थ्यमेव गृह्यत इति यावत्। पूर्वसूत्रे व्यपेक्षालक्षणे हेत्वन्तरमाह–अथवेति वाक्ये सर्पिष्करोति, सर्पिःकरोति इत्यादौ। नन्विति। सामान्यग्रहणं प्राक् समाहितमपि समाधानान्तराभिधानाय पुनराशङ्कितम्। उक्तमिति लक्ष्यानुरोधात् पुनः सामर्थ्यग्रहणाद्वा व्यपेक्षालक्षणमेव सामर्थ्यं गृह्यत इत्यनुपदमेवोक्तम्। समाधानान्तरमाह–अथवेति। इह अस्मिन् सूत्रे। अपेक्षितप्रवृत्तिनिमित्तमेवाह – संप्रेक्षितार्थमिति। परस्पराकाङ्क्षायुक्तम्। एतेन व्यपेक्षालक्षणसामर्थ्यं पूर्वसूत्रे समर्थशब्दार्थ इत्युक्तम्। गोबलीवर्दन्यायस्यैव विवरणमेतत्। अथ चेत् इत्यादिशङ्कोत्तरे संकलय्य व्याचष्टे स्यादेतदिति। कृत्प्रत्यययोरिति। अर्चिशुचिहुसृपिछादिछर्दिभ्यः इसिः इति सृपेरिसिः – सर्पिः। उसिरित्यनुवर्तमाने अर्तिपॄवपियजितनिधनिपतिभ्यो नित् इति यजेरुसिः – यजुः। प्रत्ययग्रहणपरिभाषाऽत्र नोपयुज्यत इत्यत्र ज्ञापकत्वमाह – यदि हीति। परमसर्पिःकुण्डिका इत्यत्र समासस्येसन्तत्वाभावादेव षत्वाप्राप्तेः प्रतिषेधोऽनर्थकः सन् परिभाषानुपस्थानं ज्ञापयतीत्यर्थः। पूर्वसूत्रे सामर्थ्यद्वयग्रहणेऽपि परमसर्पिःकुण्डिका इत्यत्र तेन षत्वं न भवतीत्यत्र प्रकारान्तरमाह – केचिदिति। अथ चेत् इत्यादिभाष्यं समाधानान्तरपरम्। तद् व्याचष्टे – यद्यव्युत्पन्नमिति। पूर्वेण विकल्पनिरासायेदं वक्तव्यमेव, अत आह – इसुसोरिति। अस्मिन् पक्षे नित्यग्रहणं न कर्तव्यमित्याह – नित्यग्रहणं त्विति।

अत्राव्युत्पत्तिपक्षाश्रयणेऽप्रत्ययसकारत्वेन सर्पिषा इत्यादौ षत्वं न स्यादिति व्युत्पत्तिपक्ष एवाश्रयणीय इति सर्वं सूत्रं कर्तव्यमेवेत्याह – अव्युत्पत्तिपक्षे त्विति। एतच्च आदेशप्रत्यययोः इत्यत्र भाष्यकृदेव वक्ष्यति।

**अयं भावः –**

इसुसोस्सूत्रे सामर्थ्ये इति सामान्यतो ग्रहणात् उभयविधं सामर्थ्यं गृह्यते तर्हि सर्पिष्करोति इत्यत्रेव परमसर्पिःकुण्डिकेत्यत्रापि प्राप्नोति। परन्तु लक्ष्यानुरोधात् पूर्वसूत्रे व्यपेक्षासामर्थ्यमेवोचितम्। अत्र सूत्रे व्यपेक्षा एव कुतः? इत्युक्तौ प्रयोग एव शरणम्। एवञ्च लक्ष्यानुरोधात् पुनः सामर्थ्यग्रहणाद्वा व्यपेक्षालक्षणमेव सामर्थ्यं पूर्वसूत्रे गृह्यत इत्युक्तम्। परमसर्पिःकुण्डिका इत्यत्र पूर्वपदभूतपरमसर्पिश्शब्दस्य समस्तस्य इसन्त्वाभावादेव षत्वाप्राप्तेः प्रतिषेधोऽनर्थकः सन् प्रत्ययग्रहणपरिभाषानुपस्थानं ज्ञापयतीत्यर्थः।

केचन पूर्वसूत्रे सामर्थ्यद्वयग्रहणेऽपि परमसर्पिःकुण्डिका इत्यत्र षत्वं नित्यं समासेति योगं विभज्य न भवतीति आहुः। उणादीनाम् अव्युत्पत्तिपक्षस्वीकारे अप्रत्ययसकारत्वेन सर्पिषा इत्यादौ आदेशप्रत्यययोः इति षत्वं न स्यात्। व्युत्पत्तिपक्षाश्रयणे सर्वं सम्भवति। एतच्च सर्वम् आदेशप्रत्ययसूत्रे भाष्यकारः कथयिष्यतीति भावः।

**नाराणीयम् –**

ननु पूर्वसूत्रे व्यपेक्षालक्षणसामर्थ्यस्याश्रयणात् समासे प्राप्तिर्नास्तीति कोऽयं प्रश्न इत्यत आह – इहेति। नानापदार्थयोर्वर्तमानयोः इति न समानाधिकरणे षष्ठ्यौ, किं तर्हि, पूर्वा सप्तमी, द्वितीया षष्ठीति व्याचष्टे–नानाभूतयोरिति। तच्छब्दार्थमाह – व्यपेक्षेति। न केवलं लक्ष्यानुरोधादेव, किं तु सामर्थ्यादपि विशिष्टसामर्थ्यग्रहणसिद्धिरित्याशयेनाह–अथवेति। इदंशब्देन विवक्षितमर्थमाह–परमेति। समासे एकार्थीभावस्य भावात्। अन्यशब्दार्थमाह – समासेति। परिहारान्तरमाह – अथवेति। पूर्वत्र द्विविधसामर्थ्यपरिग्रहे तस्मिन् प्राप्तेऽस्यारम्भादपवादत्वादेकवाक्यतायां सामान्यवचनस्यापि सामर्थ्यशब्दस्य विशेषे पर्यवसानं भविष्यतीत्यर्थः। प्रवृत्तिनिमित्तविशेषं स्फोरयति – संप्रेक्षितार्थमिति। न तु संसृष्टार्थमिति। अर्थ चेदित्यादिश्लोकार्धं व्याचष्टे – स्यादेतदिति। वाक्येऽपि तर्हि इत्यादिभाष्यं विवृणोति – तदयुक्तम्, परमेति। प्रतिषेधस्य ज्ञापकत्वमुपपादयति यदि हीति। केचित्तु इत्यनेन नैतद् भाष्यकारस्याभिमतमिति दर्शयति। यद्यव्युत्पन्नमिति। यद्यपि अर्चिशुचि हुसृपिच्छादिच्छर्दिभ्यः इसिः, जनेरुसिः, अर्तिपॄवपियजितनितपिभ्यो नित् इत्येवं सर्पिर्यजुरित्यादिशब्दा व्युत्पाद्यन्ते। तथाप्युणादीनामव्युत्पत्तिपक्ष इहाश्रीयेतेत्यर्थः। संविज्ञानं वाचकमिति। संविज्ञायतेऽनेनार्थ इति करणव्युत्पत्त्या। नन्वस्मिन्नसति समासेऽपि इसुसोः इत्यनेन विकल्पः स्यादित्यत आह – इसुसोरिति। एवं पक्षद्वये समर्थिते पूर्व एव पक्षो ज्यायानित्याह – अव्युत्पत्तिपक्षे त्विति। सर्पिषा यजुषेत्यादि न सिध्यतीति। सकारस्य प्रत्यसम्बन्धित्वाभावात् आदेशप्रत्यययोः इति षत्वं न स्यादित्यर्थः।

**अयं भावः –**

नानापदार्थयोर्वर्तमानयोरित्यत्र समानाधिकरणे षष्ठ्यौ न स्तः। परन्तु नानापदार्थयोरिति सप्तमी, वर्तमानयोरिति षष्ठी वर्तते। इसुसोरिति पूर्वसूत्रे द्विविधसामर्थ्यस्वीकारे तेन सूत्रेणैव प्राप्ते पुनरस्यारम्भात् अपवादत्वमुच्यते। ततः सामान्यवचनस्यापि सामर्थ्यशब्दस्य सामर्थ्यविशेषे (व्यपेक्षायाम्)

पर्यवसानं बोध्यम्। केचित्तु इत्यनेन यो योगविभागो दर्शितस्स न भाष्यकारसम्मत इति दर्शयति। यद्यपि अर्चिशुच्यादिसूत्रैः सर्पिरादिकं निष्पादयितुं शक्यते। तथापि उणादीनाम् अव्युत्पत्तिपक्ष आश्रीयेतेत्यर्थः। पक्षद्वये अव्युत्पत्तिपक्ष एव ज्यायान् इति आशयः। सर्पिषेत्यादौ व्युत्पत्त्यभावे प्रत्ययावयवत्वाभावात् आदेशप्रत्यययोरिति षत्वाप्राप्तिरिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

इसुसोरनुत्तरपदस्थस्य विसर्गस्य नित्यं षः स्यात्कुप्वोः परयोः। सर्पिष्कुण्डिका। अनुत्तरेति किम्? परमसर्पिःकुण्डिका। षष्ठीसमासपूर्वपदे कर्मधारये उत्तरपदमत्र सर्पिः शब्दः। सर्पिःकुण्डिकेति कस्कादिषु पठ्यते तद्बलादसमासेऽपि व्यपेक्षाविरहेऽपि च षत्वं नित्यम्। इदं सर्पिष्कुण्डिकायाः, तिष्ठतु सर्पिष्कुण्डिकामानय। स्यादेतत् – परमसर्पिः कुण्डिकेत्यत्र नित्यषत्वाभावेऽपि पूर्वेण वैकल्पिकं षत्वं दुर्वारमिति चेत्सत्यम्, तत्र व्यपेक्षात्मकस्यैव सामर्थ्यस्योपादानात् अन्यथा सर्पिष्करोतीत्यादौ तत्प्रवृत्त्यनापत्तेः। समासे चैकार्थीभावस्योपगमाद् व्यपेक्षासामर्थ्यानुपपत्तेः। किञ्च इसुसोः प्रत्ययत्वात् प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणमिति सर्पिरादिशब्द एव गृह्यते न तु परमसर्पिरिति तु। तत्र पूर्वसूत्रप्रवृत्तिः।

न चैवं परमसर्पिष्करोतीति वाक्येऽपि षत्वं न स्यादिति वाच्यम्, अनुत्तरपदस्थस्येति ज्ञापकाद्वाक्ये अधिकारस्यापादानात्। तदुक्तम् –

नानापदार्थयोर्वर्तमानयोः ख्यायते यदयोगः।<br>
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह।।

ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न प्रसज्येत।<br>
तस्मादिह व्यपेक्षा सामर्थ्यं साधु मन्यन्ते।।

अथ चेत् कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः।<br>
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत।।

अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम्।<br>
सिद्धं च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम्।

**अयं भावः** –

परमं सर्पिः परमसर्पिः। परमसर्पिषः कुण्डिका परमसर्पिःकुण्डिका। अत्र षष्ठी तत्पुरुषसमासपूर्वपदे कर्मधारये सर्पिश्शब्द उत्तरपदम्। स्यादेतदित्यनेन किञ्चिन्मतं प्रस्तूयते – परमसर्पिःकुण्डिकेत्यत्र नित्यषत्वाभावेऽपि इसुसोरिति षत्वं विकल्पः स्यादेव खलु इति चेत् इसुसोः प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया परमसर्पिश्शब्दः इसन्तो न भवति। तेन षत्वं न प्रवर्तते विकल्पेनापि। तर्हि परमसर्पिष्करोतीत्यादावपि षत्वं कथमित्युक्ते अनुत्तरपदस्थस्येति ज्ञापकाद्वाक्ये अधिकस्याप्युपादानात् सिध्यति। एवञ्च इणः ष इत्यधिकारे प्रोक्तानि षत्वविधायकानि सूत्राणि, तेषां भिन्नग्रन्थानुसारं व्याख्यानं तस्य भावार्थश्च प्रत्यपादि।

**वैयाकरणसिद्धान्तकौमुदी** –

144. कस्कादिषु च। (8–3–48) – वैयाकरणसिद्धान्तकौमुद्यां हल्सन्धिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे अष्टचत्वारिंशत्तमं सूत्रमिदं विद्यते।

वृत्तिः – क पयोरपवादः। एष्विण उत्तरस्य विसर्गस्य षः स्यात्। अन्यस्य तु सः। काँस्कान्, कांस्कान्। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालम्। आकृतिगणोऽयम्।

व्याख्यानम् – कस्कादिगणपठितेषु शब्देषु येषु इण उत्तरं विसर्गो वर्तते तस्य षकारादेशो भवति। इण्भिन्नादुन्तरं विसर्गस्य सकारादेशो भवति इत्यर्थः। यथा–सर्पिष्कुण्डिका इतीणः परस्योदाहरणम्। कस्क इति इण्भिन्नादुत्तरं विसर्गस्योदाहरणम्। अस्मिन् गणे इत्थं शब्दा अपठ्यन्त–कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः, सद्यस्कालः, सद्यस्कीः, साद्यस्कः, कांस्कान्, सर्पिष्कुण्डिका, धनुष्कपालम्, बहिष्पलम् (बर्हिष्पलम्), यजुष्पात्रम्, अयस्कान्तः, तमस्काण्डः, अयस्काण्डः, मेदस्पिण्डः, भास्करः, अहस्करः इति कस्कादिराकृतिगणः। अत्र गणे त्रयोदश शब्दाः सकारस्य षट् षकारस्योदाहरणत्वेन न्यगादिषत। अन्येऽपि एतत्समानाश्शब्दा अत्र गणे गण्या इति आकृतिगणोऽयम्।

उदाहरणम् – कस्कः। कः कः इत्यवस्थायां किम्शब्दादग्रे विद्यमानस्य इण्भिन्नादुत्तरस्य विसर्गस्य कुप्वोः परयोः सकारादेशो भवति अनेन सूत्रेण। उदाहरणम् – भ्रातुष्पुत्रः। भ्रातुः पुत्र इत्यवस्थायां भ्रातुः इति उकारोत्तरं विद्यमानस्य विसर्गस्य षकारे परे अनेन सूत्रेण षकारादेशो भवति। भ्रातुष्पुत्र इति रूपं सिध्यति। कुप्वोःक पौ चेति विहितविसर्गस्यायमपवादः। अतो न जिह्वामूलीयोपध्मानीयौ गणपठितेभ्यः शब्देभ्यः।

**बालमनोरमा** –

इण इत्यनुवर्तते। इण इति पञ्चम्यन्तम्। विसर्जनीयस्य स इत्यतो विसर्जनीयस्य इत्यनुवर्तते। कस्कादिषु इति विषयसप्तमी। कस्कादिगणे इणः परस्य विसर्गस्य षः स्यादित्यर्थः। सोऽपदादौ इत्यतः स इति प्रथमान्तमनुवर्तते। कस्कादिषु अनिणः परस्य विसर्गस्य सत्वं स्यादित्यर्थः। तदेवं वाक्यद्वयं सम्पद्यते। कस्कादिषु तथाविधानामेव कृतषत्वसत्वानां निर्देशादयं विषयविभागः। क पयोरपवाद इति। क पयोः इत्युपलक्षणं कुप्वोरिति विहितविसर्गस्यापि। अन्यस्य तु स इति। प्रकृते विसर्गस्य इणः परत्वाभावाद् न षत्वम्। किन्तु सत्वमित्यर्थः। काँस्कानिति अनुनासिकपक्षे रूपम्। कांस्कानिति अनुस्वारपक्षे रूपम्। अथ कस्कादिगणं पठति – कस्क इत्यादिना। वीप्सायां द्वित्वे पूर्वखण्डे अकारात् परस्य विसर्गस्य सत्वम्। कः कोऽत्र भो इति प्रयोगे तु संहिताविरहात् सत्वाभावः, कस्कादिषु च इत्यस्य तयोर्य्वावचि संहितायाम् इति संहिताधिकारस्थत्वादित्याहुः। कौतस्कुत इति। वीप्सायां द्विर्वचने कुतः कुत आगत इत्यर्थे तत आगत इत्यण्। अव्ययानां भमात्रे टिलोपः। अत एव निपातनाद् अव्ययात्त्यप् इति न। सर्पिष्कुण्डिकेति। अत्र इणः परत्वात् षत्वम्। एवं धनुष्कपालम्, चतुष्कपालम् इत्यत्रापि। ननु कस्कादिगणे कांस्कानित्यस्य पाठाभावात् कथं सत्वमित्यत आह – आकृतिगणोऽयमिति। एवं च कस्कादित्वादेव कांस्कानित्यत्र सत्वसिद्धेः संपुंकानामित्यत्र कान्ग्रहणं न कर्तव्यमिति भावः।

**अयं भावः –**

कस्कादिगणे लक्ष्यानुसारं विषय विभागः कृतः। यथा – कस्कादिगणे इणः परस्य विसर्गस्य षः स्यात् इत्येकोऽर्थः। कस्कादिगणे अनिणः परस्य विसर्गस्य सत्वं स्यादिति अपरोऽर्थः। गणे तादृक्षाणां कृतषत्वसत्वानां सत्त्वाद्विषयविभागोऽकारि। भ्रातुष्पुत्रः, कस्क इत्यादीनि क्रमश उदाहरणानि। संहितायां विवक्षयामेव षत्वसत्वे। तदभावे कः कोऽत्र भो इत्यादिवाक्ये संहिताभावान्न ते। आकृतिगणस्य प्रयोजनं तावत् कांस्कान् इत्यत्र अनेन सकारादेशः। कस्कादित्वादेव सत्वे सिद्धे कांस्कानिति सत्वनिमित्तं संपुङ्कानामित्यत्र कान्ग्रहणं न कर्तव्यमिति भावः।

**तत्त्वबोधिनी –**

अत्र सोऽपदादौ इत्यतः स इति इणः षः इति सूत्रं चानुवर्तते। तदाह – एष्विण उत्तरस्येत्यादि। कौतस्कुत इति। कुतः कुत आगत इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादणित्याहुः। 'अव्ययाना भमात्रे' इति वक्ष्यमाणेनात्र टिलोपः। सर्पिष्कुण्डिकेति। नित्यं समासे इत्येव सिद्धे इह पाठस्य प्रयोजनसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति।

**अयं भावः –**

कुतः कुत आगत इत्यर्थे अव्ययात्त्यप् इति त्यप् प्राप्तः। परन्तु गणपाठसामर्थ्यात् तत आगत इति अण् भवतीत्यर्थः। सर्पिष्कुण्डिकेत्यत्र नित्यं समासेऽति सिद्धे षत्वे गणपाठे निवेशः असमासे व्यपेक्षाविरहेऽपि षत्वं भवेदिति धियेति भावः।

**प्रौढमनोरमा –**

अत्र प्राचा विसर्जनीयस्य क पौ नेत्युक्तं, नासौ सूत्रार्थः। क पयोरस्वरितत्वात्, नञश्चाप्रकृतत्वात्। किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह क पयोरिति। कौतस्कुत इति। कुतः कुत आगत इत्यर्थेऽव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादण्। सर्पिष्कुण्डिकेति। नित्यं समासे–इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रैव वक्ष्यते।

**अयं भावः –**

कस्कादिसूत्रविषये प्राचीनवैयाकरणैः विसर्जनीयस्य क पौ न इत्युक्तम्। परन्तु अयं सूत्रार्थो नास्ति। यतो हि स्वरितत्वप्रतिज्ञाया अभावात् क पयोरनुवृत्तिः नास्ति। तथा च 'न भवतीति' वक्तुं नञः प्रकृतसन्दर्भो नास्ति। तत्तु आर्थिककथनं न तु सूत्रार्थः। तद्ध्वनयितुं वदति कौमुद्यां क पयोरपवाद इति। कौतस्कुत इत्यत्र अव्ययत्वात् आगतार्थे त्यपि प्राप्ते गणपाठसामर्थ्याद् अण् इति तात्पर्यम्। सर्पिष्कुण्डिकेति उदाहरणे नित्यं समासे इत्यनेन सिद्धे षत्वे पुनः कस्कादिगणपठितस्य प्रयोजनं तु नित्यं समासेत्यत्र वक्ष्यते इति भावः।

**लघुशब्देन्दुशेखरः** –

एष्विण इति। गणे कृतसत्वषत्वानामेव पाठादिति भावः। क पयोरपवाद इति। तद्विहितविसर्गस्यापीत्यपि बोध्यम्। कॉस्कान्[5] इति। वीप्सायां द्वित्वम्।

**अयं भावः**–

कस्कादिसूत्रार्थे विषयविभागः कृतः गणपठितशब्दानामाधारेण। केवलं जिह्वामूलोपाध्मानीययोरेवापवादः। अपि तु तद्बोधितविसर्गस्यापि इति भावः।

**काशिकावृत्तिः** –

कस्क इत्येवमादिषु च विसर्जनीयस्य सकारः षकारो वा यथायोगमादेशो भवति कुप्वोः परतः। कस्कः। कौतस्कुतः 'कुत आगत इत्यण्। भ्रातुष्पुत्रः। शुनस्कर्णः। सद्यस्कालः। सद्यस्कीः। क्रीणातेरयं सम्पदादित्वात् क्विप्प्रत्ययः। तत्र भवः क्रतुः साद्यस्क्रः। कांस्कान् – कानाम्रेडिते इति रुत्वमत्र। सर्पिष्कुण्डिका, धनुष्कपालम्, बर्हिष्पूलम्, यजुष्पात्रमित्येषां पाठ उत्तरपदस्थस्यापि षत्वं यथा स्याद् इति। परमसर्पिः फलमित्येवमादि प्रत्युदाहरणादिति पारायणिका आहुः। भाष्ये, वृत्तौ नित्यं समासेऽनुत्तरपदस्थस्य इत्यत्र परमसर्पिःकुण्डिकेत्येतदेव प्रत्युदाहरणम्। अयस्काण्डः। मेदस्पिण्डः। अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः।

**अयं भावः** –

कस्कादिगणे सकारो वा षकारो वा यथायोगं भवति कुप्वोः परत इति। सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्यापि विसर्गस्य षत्वं यथा स्यादित्येवमर्थम्। अन्यथा नित्यं समासेति सिद्धे एषां पाठो व्यर्थः स्यात्। परमसर्पिःफलमित्यादिकं प्रत्युदाहरणमिति पारायणिका वदन्ति। भाष्ये वृत्तौ च परमसर्पिःकुण्डिकेति प्रत्युदाहरणम्। गणातिरिक्ताः तत्समानाः शब्दा अपि प्रकृतगणे अदर्तव्या इति भावः। इत्थमिणः ष इति अधिकारे, प्रोक्तानां षत्वविधायकसूत्राणां विविधग्रन्थानुसारं मतं विन्यस्तम्। इतः परमपदान्तस्य मूर्धन्य इत्यधिकारे प्रोक्तानां षत्वविधायकसूत्राणां विविधग्रन्थानुसारं परिशीलनं क्रियते।

## *सन्दर्भसूची*

1. इणः षः इत्यत्र स इति न सम्बध्यते। षकारेण बाधात्। चकाराभावाच्च समुच्चय इति बोध्यम्। – प्रौढमनोरमा, विभा टिप्पणी।
2. निष्कोषितव्यान् निष्कोष्टुं प्राणान् दशमुखात्मजान्।
   आदाय परिघं तस्थौ वनान् निष्कुषितद्रुमः।। – भट्टिकाव्यम्,सर्गः–09,श्लोकः–30
3. षत्वं विभाषया मा भूदित्यन्वयः। – महाभाष्यम्,द्विस्त्रिसूत्रम् – उद्योतः।
4. भाष्ये अथशब्दो यद्यर्थे इति भावः। – तत्रैव ।
5. यत्र द्विरुक्तिः तत्रैव आम्रेडितम्। प्रौढमनोरमा, कानाम्रेडिते सूत्रम्।

---------------

# मूर्धन्याधिकारचिन्तनम्

**वैयाकरणसिद्धान्तकौमुदी –**

210. अपदान्तस्य मूर्धन्यः। (8–3–55) – वैयाकरणसिद्धान्तकौमुद्याम् अजन्तपुँल्लिङ्ग– प्रकरणे वर्तत इदं सूत्रम्। अष्टाध्यायाम् अष्टमाध्यायस्य तृतीयपादे पञ्चपञ्चाशत्तमं सूत्रमिदम् अधिकारसूत्रम्।

वृत्तिः – आपादपरिसमाप्तेरधिकारोऽयम्। अष्टमाध्यायस्य तृतीयपादसमाप्तिपर्यन्तमय–मधिकारोऽनुवर्तते।

**बालमनोरमा –**

रामे सु इति स्थिते आदेशप्रत्यययोः इति षत्वं विधास्यन्नाह–अपदान्तस्य।। मूर्धन्यः – मूर्धस्थानकः। अष्टमाध्यायस्य तृतीयपादे मध्यत इदं सूत्रं पठितम्। इत आरम्भ्यैतत्पादसमाप्तिपर्यन्तमिदमधिक्रियत इत्यर्थः।

**तत्त्वबोधिनी –**

अपदान्तस्य। ष इत्येव सिद्धे मूर्धन्यग्रहणम् इणः षीध्वम् इति ढत्वार्थम्। चकृढ्वे। अकृढ्वम्।

**अयं भावः –**

मात्रालाघवेन मूर्धन्यशब्दापेक्षया षकारविधानलाघवेन गौरवविधानं कुत इत्युक्ते अग्रे इणः षीध्वम् इत्यत्र ढविधानार्थं मूर्धन्यग्रहणम् इति भावः।

**लघुशब्देन्दुशेखरः –**

अपदान्तस्य। ष इत्येव सिद्धे मूर्धन्यग्रहणम् इणः षीध्वमित्यस्य ढविधानार्थम्, रषाभ्यामित्यत्रानुवृत्त्यर्थञ्च। एवञ्च तत्र णग्रहणं पदान्तस्येति च न कर्तव्यमिति भाष्ये स्पष्टम्।

**अयं भावः –**

मूर्धन्यग्रहणम् इणः षीध्वमित्यत्र ढविधानार्थम्। अथ च रषाभ्यां नो णः समानपदे इत्यत्रानुवृत्त्यर्थं च वर्तते। तेन रषाभ्यां सूत्रे णग्रहणस्य तथा च पदान्तस्य इति सूत्रस्य च आवश्यकता न भवति।

**काशिकावृत्तिः –**

पदाधिकारो निवृत्तः। अपदान्तस्य इति मूर्धन्य इति चैतदधिकृतं

वेदितव्यमापादपरिसमाप्तेः। वक्ष्यति आदेशप्रत्यययोः। सिषेव। सुष्वाप। अग्निषु। वायुषु। अपदान्तस्येति किम्? अग्निस्तत्र, वायुस्तत्र। ष इत्येव सिद्धे मूर्धन्यग्रहणं ढकारार्थम् – अकृढ्वम्, चकृढ्वे।

**अयं भावः –**

सूत्रे पदद्वयमपि पादपरिसमाप्तिं यावदधिक्रियते। एतस्य प्रयोजनमग्रे आदेशप्रत्यययोरित्यादिषु वर्तते। अपदान्तस्येति पदाभावे अग्निस्तत्रेत्यादावपि षत्वं स्यात्। अतस्तद्दलमुक्तम्। मूर्धन्यग्रहणं तु ढकारार्थम्।

**महाभाष्यम् –**

अथ मूर्धन्यग्रहणं किमर्थम्? नापदान्तस्य षो भवतीत्येवोच्येत,तत्रा– यमप्यर्थः षकारग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। क्व प्रकृतम्? इणः ष इति। नैवं शक्यम्। अवश्यं मूर्धन्यग्रहणं कर्तव्यम् – इहार्थमुत्तरार्थं च। इहार्थं तावात् इणः षीध्वंलुङ्लिटां धोऽङ्गादित्यत्र मूर्धन्यग्रहणं न कर्तव्यं भवति। उत्तरार्थम् – रषाभ्यां नो णः समानपदे इत्यत्र णकारग्रहणं न कर्तव्यं भवति। तत्रायमप्यर्थः पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति। अपदान्ताभिसम्बद्धं मूर्धन्यग्रहणमनुवर्तते।

**अयं भावः –**

प्रकृतसूत्रे इण इत्येवानुवृत्तौ सिद्धे षकारे मूर्धन्यग्रहणं कुत इति चेद् अवश्यं मूर्धन्यग्रहणं कर्तव्यम् – इहार्थमुत्तरार्थञ्चेत्युक्तम्। इहार्थं नाम इणः षीध्वमित्यत्र मूर्धन्यग्रहणं न कर्तव्यं भवति। उत्तरार्थं नाम राषाभ्यां नो णः इत्यत्र मूर्धन्यग्रहणानुवृत्तौ णकारो न कर्तव्यो भवति इति प्रयोजनद्वयमस्ति। तत्रापि पुनः पदान्तस्य न इति निषेधो न वक्तव्यः। अपदान्तस्येत्यनुवृत्तौ पदान्तस्य प्राप्तेरेवाभावे निषेधो व्यर्थ इति भावः।

**प्रदीपः –**

अथेति। मूर्धन्यग्रहणं गुर्विति प्रश्नः। इणः षीध्वमिति। इहाक्रियमाणे मूर्धन्यग्रहणे इणः षीध्वमित्यत्र ढग्रहणं कर्तव्यम्, ततः समासाङ्गुलेरित्यत्र षग्रहणं कर्तव्यम्। अपदान्ताभिसम्बद्धमिति। रषाभ्यामित्यत्रापदान्तग्रहणानुवर्तनात्पदान्तस्येति सूत्रं न कर्तव्यं भवतीति लाघवं सम्पद्यते।

**अयं भावः –**

गौरवान्मूर्धन्यग्रहणं कुत इति प्रश्ने इहार्थमुत्तरार्थञ्चेति समाधायि। अत्र मूर्धन्यग्रहणाभावे इणः षीध्वमित्यत्र ढग्रहणं कृत्वा पुनः समासाङ्गुलेः स' इत्यत्र षग्रहणं कर्तव्यं भवति। पुनश्च रषाभ्यामित्यत्र अपदान्तग्रहणानुवृत्तौ पदान्तस्य निषेधो न कर्तव्यो भवतीति भावः।

**उद्योतनम् –**

गुर्विति। ष इत्युक्ते लाघवमित्यर्थः। अप्राप्तप्रतिषेधशङ्कां निराह – इहाऽक्रियमाणइति। मूर्धन्यग्रहणानुवृत्तेरुक्तत्वादत्र विशेषेणानुवृत्तिरप्यङ्गीकार्या गौरवपरिहारायेत्युच्यते – रषाभ्यामित्यत्रेति।

**अयं भावः –**

मूर्धन्यपदापेक्षया ष इत्युक्ते लाघवमिति मनसि निधाय प्रश्नः। गौरवपरिहाराय विशेषानुवृत्तिरपि वक्तव्या मूर्धन्यग्रहणानुवृत्तेः इति भावः।

**नारायणीयम्** –

ननु पदेन पदान्तरस्य प्रत्याख्यानमसमञ्जसमिव भातीत्यत्राह मूर्धन्येति। मात्राधिक्यात्। षग्रहणं कर्तव्यमिति। ढग्रहणेन विच्छिन्नत्वादुनुवृत्त्ययोगात्। पदेन पदान्तरस्य तिरस्कारस्समञ्जसो न भाति इति मनसि निधायोच्यते मूर्धन्येति। पुन षग्रहणं कर्तव्यमेव भवति ढग्रहणेन षग्रहणस्य विच्छिन्नत्वात् अनुवृत्त्ययोगाच्चेति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

अधिकारोऽयम् आपादपरिसमाप्तेः। उत्तरसूत्रैः सह पदैकवाक्यतयाऽस्य प्रवृत्तिर्वक्ष्यते। भाष्यमते तु षत्वप्रकरणपर्यन्तस्यानुवृत्तिरित्यग्रेऽभिधेयम् नन्वपदान्तस्येत्येवास्तु। इणः ष इति सूत्रात् षकारानुवृत्त्यैव विधेयलाभात्। मैवम्। इणः षीध्वं लुङ्लिटां धोऽङ्गादित्यत्र धकारस्य ढकारादेशस्य विधेयत्वात् मूर्धन्यपदेनैवैतल्लाभात्। एवं रषाभ्यां नो णः समानपदे इत्यत्रापि मूर्धन्यानुवृत्त्यैव सिद्धौ षग्रहणं न कर्तव्यं भवति। एवं पदान्तस्येति निषेध– सूत्रमप्यनारभ्यमिति लाघवम्। अपादान्तस्य तस्य मूर्धन्यादेश इत्यत एव सिद्धेः।

**अयं भावः** –

केवलम् अपदान्तस्येत्येव सूत्रे सति इणः ष इत्यनुवृत्त्या षत्वे सिद्धे पुन मूर्धन्यग्रहणं कुत इति प्रश्ने इणः षीध्वमित्यत्र धकारस्य स्थाने ढकारादेशोऽपेक्षितः। षत्वविधाने पुनरत्रापि षत्वं स्यात्। रषाभ्यामित्यत्र मूर्धन्यपदानुवृत्त्यैव णत्वे सिद्धे पुनर्णत्वग्रहणं व्यर्थम्। ततश्च अपदान्तस्य षत्वे पदान्तस्येति निषेधोऽपि नावश्यक इति लाघवमस्तीति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

211. इण्कोः (8–3–57) – वैयाकरणसिद्धान्तकौमुद्याम् अजन्तपुँल्लिङ्गप्रकरणे इदं सूत्रं वर्तते। अष्टाध्यायाम् अष्टमाध्यायस्य तृतीयपादे सप्तपञ्चाशत्तमं सूत्रं विद्यते। अधिकारसूत्रमेतत्। आपादपरिसमाप्तेरयमप्यधिकारो वर्तते।

वृत्तिः – इत्यधिकृत्य।

व्याख्यानम् – इण्कोः इति अधिकारसूत्रं पादसमाप्तिं यावदधिक्रियते। इण्कोरिति पञ्चम्यन्तं वर्तते। इणः परस्याथवा कवर्गात् परस्येत्यर्थः।

**बालमनोरमा** –

इण्कोः इत्यधिकृत्येति। उत्तरत्र विधिष्वनुवर्तते इति भावः। इण् च कुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वे त्वेकवचनमार्षम्। इणिति परणकारेण प्रत्याहारः। कुः कवर्गः।

**अयं भावः** –

इण्कोः इत्यत्र द्वन्द्वघटितपदद्वयस्य सत्वादेकवचनं कुत इति चेत् समाहारद्वन्द्वे

पुंस्त्वमार्षमित्युक्तम्। इतरेतरयोगद्वन्द्वः स्वीक्रियते चेत् एकवचनमार्षम् इति वक्तव्यम्। इण् इति माहेश्वरस्थपरणकार इति भावः।

**तत्त्वबोधिनी –**

इण्कोः– समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। कोः किम्? गवाक्षु। गवाङ्क्षु।

**अयं भावः –**

इण्कोरिति समाहारद्वन्द्वः। पुंस्त्वन्तु सौत्रत्वादित्युक्तम्। केवलमिण् इत्युक्तौ गवाक् सु इत्यवस्थायां षत्वं न स्यात्। अतः कोरित्युक्तम्। तेन गवाक्ष्विति षत्वं सिध्यति।

**लघुशब्देन्दुशेखरः –**

वर्गग्रहणञ्चर्त्वस्यासिद्धत्वात् स्रक्ष्वित्याद्यर्थम्।

**अयं भावः** – ननु इण्क इत्येवास्तु। वर्गग्रहणं कुत इति चेत् कोरित्यभावे ककारोपादाने

स्रक्षु इत्यादौ चोः कुरिति कुत्वे जस्य चर्त्वे, षत्वे कर्तव्ये तस्यासिद्धत्वात् षत्वानापत्तिरिति तदर्थं कुरिति वर्गग्रहणं कर्तव्यमिति भावः।

**काशिकावृत्तिः –**

इण्कोः इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः, इण कवर्गाच्चेत्येवं तद्वेदितव्यम्। वक्ष्यति–आदेशप्रत्यययोः। सिषेव। सुष्वाप। अग्निषु। वायुषु। कर्तृषु। गीर्षु। धूर्षु। वाक्षु। त्वक्षु। इण्कोरिति किम्? दास्यति। असौ।

**अयं भावः –**

इण्कोरित्यधिकारसूत्रम्। इण्कोरित्यस्मात्परं यत्कार्यं प्रोच्यते तदिणः कवर्गाच्च भवतीति ज्ञातव्यम्। यथा–आदेशप्रत्यययोः इत्यत्र। उदाहरणम् – सिषेव। अत्र सि इतीण् वर्तते। ततोऽग्रे सकारो वर्तते। तस्य षकार इत्यर्थः। इणित्यभावे दास्यतीत्यदोषत्वापत्तिः। तद्वारणाय इणिति पदम्।

**वैयाकरणसिद्धान्तकौमुदी –**

434. नुम्विसर्जनीयशर्व्यवायेऽपि। (8–3–58) – वैयाकरणसिद्धान्तकौमुद्यां हलन्तपुँल्लिङ्गप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे अष्टपञ्चाशत्तमं सूत्रमस्ति।

वृत्तिः – एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षत्वम्। पिपठीष्षु। पिपठीःषु। प्रत्येकम् इति व्याख्यानादनेकव्यवधाने षत्वं न। निंस्स्व। निंस्से। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात्। तेनेह न – सुहिन्सु। पुंसु। अत एव शर्ग्रहणेन गतार्थता।

व्याख्यानम् – नुमादिभिः□प्रत्येकं व्यवधानेऽपि इण्कवर्गाभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। यथा – पिपठीष्षु, पिपठीःषु, पिपठीस् सु इति स्थिते प्रथमसकारेण शरा व्यवधानेन ईकारादिणः परस्य सकारस्यानेन षत्वं भवति। ततः पूर्वसकारस्य ष्टुना ष्टुरिति सूत्रेण ष्टुत्वे पिपठीष्षु इति सिध्यति। पिपठीः षु इत्यत्र वा शरि इत्यनेन विकल्पेन विसर्गे रूपम्। प्रत्येकं व्यवधाने षत्वमिति व्याख्यानात् निंस्स्व इत्यत्रानेकव्यवधाने न षत्वम्। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानादित्युक्तम्। तेन सुहिन्सु इत्यादौ, पुंसु इत्यत्र च नुमः अनुस्वारस्य च सत्त्वेऽपि नुम्स्थानिकानुस्वारस्याभावात् न षत्वमित्याशयः। नुमः तादृशार्थस्वीकारादेव शर्व्यवायेऽपि इति सूत्रमेव पर्याप्तमिति भावः।

**बालमनोरमा –**

नुम्विसर्जनीय। इण्कोः इति मूर्धन्य इति चानुवर्तते। तदाह – एतैः प्रत्येकमित्यादिना। अत्र प्रत्येकमेव नुमादिभिर्व्यवधानं विवक्षितम्। न तु अट्कुप्वाङ्–इतिवत् यथासम्भवं व्यवधानमिति भाष्ये स्पष्टम्। ततश्च प्रकृते विसर्जनीयपक्षे तेन व्यवधानेऽपि षत्वमिति भावः। विसर्जनीयस्य सत्त्वपक्षे आह – ष्टुत्वेनेति। पिपठीस् सु इति स्थिते प्रथमसकारेण शरा व्यवायमाश्रित्य ईकारादिणः परत्वाद् द्वितीयसकारस्य षत्वे सति पूर्वस्य सकारस्य ष्टुत्वेन षकारः, न तु आदेशप्रत्यययोः इति षः। अपदान्तस्य इत्यनुवृत्तेरिति भावः। एवञ्च नुम्शर्व्यवायेऽपि इत्येव सिद्धे विसर्जनीयग्रहणं व्यर्थमित्याहुः। अयोगवाहानां शर्ष्वपि पाठादिह विसर्जनीयग्रहणं भाष्ये प्रत्याख्यातम्। निंस्स्वेति। णिसि चुम्बने लुग्विकरणः। णो न इति णस्य नः, इदित्वान्नुम्। अनुदात्तेत्त्वादात्मनेपदम्। लोण्मध्यमपुरुषैकवचनं थास्, थासः से, सवाभ्यां वामौ इत्येकारस्य वत्वम्। निन्स् स्व इति स्थिते नश्चापदान्तस्य – इत्यनुस्वारे निंस्स्वेति रूपम्। अत्र यथासम्भवं व्यवधानाश्रयणे तु नुम्स्थानिकानुस्वारेण सकारेण च व्यवहितस्य द्वितीयसकारस्य षत्वं स्यात्। अतः प्रत्येकं व्यवधानमाश्रितमिति भावः। निंस्से इति। उक्तधातोर्लण्मध्यमपुरुषैकवचनं थास्। तस्य थासः से इति से आदेशः। निंस्से इत्यत्रापि द्वितीयसकारस्य षत्वं न भवति। प्रत्येकमेव व्यवधानाश्रयणादिति भावः। हिसि हिंसायाम् सुपूर्वादस्मात् क्विप्, इदित्वान्नुम्, ततः सप्तमी बहुवचने सुहिन्स् इति स्थिते प्रथमसकारस्य संयोगान्तलोपे सुहिन्सु इति रूपम्। स्वादिषु पदान्तत्वाद् नश्चापदान्तस्य इत्यनुस्वारो न। किंच पुम्शब्दात् सप्तमीबहुवचने पुंस् सु इति स्थिते प्रथमसकारस्य संयोगान्तलोपे पुंसु इति रूपम्। तत्र सुहिन्सु इत्यत्र नुमा व्यवधानात् षत्वं स्यात्। नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वे पुंसु इत्यत्र षत्वं स्यादित्यत आह – नुम्ग्रहणमिति। व्याख्यानादिति। प्रकृतसूत्रे हयवरट्सूत्रे च भाष्ये तथा व्याख्यानादित्यर्थः। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थमित्येतत् सूत्राक्षरानुगतमित्याह – अत एव न शर्ग्रहणेन गतार्थतेति। नुम्ग्रहणस्य नुम्स्थानिकानुस्वारोपलक्षणार्थत्वादेव शर्ग्रहणेन नुम्ग्रहणस्य गतार्थता – लब्धप्रयोजनता नेत्यर्थः। नुम्ग्रहणस्य केवलानुस्वारस्योपलक्षणार्थत्वे तु शर्ग्रहणेनैव सिद्धत्वात् तद्ग्रहणमनर्थकं स्यात् अनुस्वारस्य शर्ष्वपि पाठादिति भावः।

**अयं भावः –**

अस्मिन् सूत्रे नुमादिभिः प्रत्येकमेव व्यवधानमभिप्रेतम्। न तु अट्कुप्वाङिति यथासंभवं व्यवधानमपेक्षितम्। पिपठीष्षु इत्यत्र प्रथमसकारस्य आदेशप्रत्यययोरिति षत्वं न भवति पदन्ते सस्य सत्त्वात् तत्रापदान्तस्येत्युक्तत्वात्। विसर्गस्य अयोगवाहत्वात् अयोगवाहानां शर्षूपदेशस्य भाष्ये उक्तत्वात् नुम्शर्व्यवायेऽपि इत्येव सिद्धे विसर्जनीयग्रहणं प्रत्याख्यातमाकरे। निंस्स्वेत्यत्र निंस्धातोर्लोटि

मध्यमपुरुषैकवचने निंस् स्व इत्यवस्थायां नुम्स्थानिकानुस्वारेण सकारेण च व्यवधानात् द्वितीयसकारस्य न षत्वम्। एवमेव निंस्से इत्यत्रापि। नुम्ग्रहणस्य अनुस्वारोपलक्षणार्थत्वात् पुंसु इत्यत्र मकारस्थानिकानुस्वारसत्वात् न षत्वम्। नुमोऽभावेऽपि शर्व्यवायेऽपि इति कथनादपि इष्टेसिद्धिर्भवति। एवं च सूत्रे नुम्निसर्जनीयग्रहणं नापेक्षितमिति भावः।

**तत्त्वबोधिनी –**

नुम्विसर्जनीय। इण्कोः इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम्। ष्टुत्वेन पूर्वस्येति। सनः सस्य रुत्वविसर्गयोः कृतयोः वा शरि इति विकल्पात् पक्षे सकारस्तेन शर्व्यवाये सुपः सस्य षत्वम्, पूर्वस्य ष्टुत्वम्, न तु आदेशप्रत्यययोः इति षः, पदान्तस्य इति निषेधादिति भावः। एवं स्थिते शर्ग्रहणेन न प्रयोजनम्। किं तु नुम्विसर्जनीयव्यवायेऽपि इत्येव सूत्रं युक्तमित्येके। नुम्शर्व्यवायेऽपि इत्येव युक्तं सूत्रयितुम्, शर्ग्रहणेन विसर्जनीयस्य लाभादित्यन्ये। निंस्स्वेति। आद्यसकारस्य प्रत्येकं व्यवधानेऽपि आदेश– प्रत्ययावयवत्वाभावात् षत्वं न भवति न चात्र आदेशप्रत्यययोः इत्यनुवृत्त्यभावात् नुम्विसर्जनीय– इत्यनेन धातुसकारस्य षत्वं स्यादिति वाच्यम्, तस्य स्वातन्त्र्येण विधायकत्वानङ्गीकारात्। अपदान्तस्य मूर्धन्यः' इण्कोः इतिवत् नुम्विसर्जनीय– इत्यस्याप्याधिकारसूत्रत्वात्।

**अयं भावः –**

पिपठीषु इत्यत्र पिपठीः सु इत्यवस्थायां सन्प्रत्ययसकारस्य पदान्तस्य रुत्वे विसर्गे च कृते वा शरि इति विकल्पेन विसर्गे पक्षे सकारे तेन शर्व्यवाये सुपः सकारस्यानेन षत्वम्। पूर्वस्य सकारस्य ष्टुना ष्टुः इति षत्वे पिपठीषु इति सिध्यति। विसर्गस्य वा विसर्गे पिपठीःषु इति च सिध्यति। केचन नुम्विसर्जनीयव्यवायेऽपि इत्येव सूत्रं भवतु इति वदन्ति। अन्ये केचन नुम्शर्व्यवायेऽपि इत्येव सूत्रमस्तु इति वदन्ति। अपरे केचन अनुस्वारस्यायोगवाहत्वात् तस्य शर्षु पाठात् शर्व्यवायेऽपि इत्येव पर्याप्तमित्यपि वदन्ति। निंस्स्वेत्यत्राद्यसकारस्य प्रत्ययावयवत्वाभावान्न षत्वम्। द्वितीयस्यानेकव्यवधानात् न षत्वमिति भावः।

**प्रौढमनोरमा –**

ष्टुत्वेनेति। सनः सस्य रुत्वविसर्गयोः कृतयोः वा शरि इति विकल्पात् पक्षे सकारः। तेन शरा व्यवाये सुपः सस्य षत्वं पूर्वस्य ष्टुत्वम्, न तु आदेशप्रत्यययोः इति षः। अपदान्तस्य इति निषेधादिति भावः। एवं स्थिते सकारग्रहणेन सिद्धे शर्ग्रहणस्य प्रयोजनं चिन्त्यम्। व्याख्यानादिति। असम्भवादिति हरदत्तोक्तिर्नादर्तव्या। सुहिन्सु इत्यत्र सम्भवादिति भावः।

**अयं भावः –**

पिपठीषु इत्यत्र पक्षे सकारे शर्व्यवायेऽनेन षत्वमित्यर्थः। आदेशप्रत्यययोरिति न षत्वम् अपदान्तस्य सस्य षत्वमिति कथनात्। एवं सकारग्रहणेन सिद्धे शर्ग्रहणस्य प्रयोजनं चिन्त्यम्। अनुस्वारोपलक्षणमसम्भवमिति हरदत्तेनोक्तं नादर्दव्यमिति। यतो हि सुहिन्सु इत्यादौ सम्भवात्।

**लघुशब्देन्दुशेखरः –**

नुम्वि। इण्कोः इति वर्तते। व्यवधानेऽप्राप्तेरिदम्। अयमप्याधिकारः। अत एव निंस्स्व इत्यत्र धातोस्सस्य नानेन षत्वम्। व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात्। तदाह–प्रत्येकमिति। अपिनाऽव्यवधानेऽपि। नुम्स्थानिकेति। प्रकृतसूत्रस्थं हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम्।

**अयं भावः –**

आदेशप्रत्ययादिकमव्यवधाने प्रोक्तम्। अतो व्यवधाने केनापि अप्राप्ते इदं सूत्रमुच्यते। इदमपि अधिकारसूत्रम्। अनेकव्यवधाने षत्वाभावादेव निंस्स्वेत्यादौ धातोः सकारस्य अनेन सूत्रेण षत्वं नास्ति। व्यवधानं प्रत्येकं भवेत् न तु अनेकम्। सूत्रेऽपिशब्देन अव्यवधानेऽपि भवतीत्यर्थः। अनुस्वारोपलक्षणविषये हयवरट्सूत्रस्थभाष्यं प्रमाणमिति भावः।

**काशिकावृत्तिः –**

नुम्व्यवायेऽपि विसर्जनीयव्यवायेऽपि शर्व्यवायेऽपि इण्कोरुत्तरस्य सकारस्य

मूधर्न्यादेशः भवति। व्यवायशब्दः प्रत्येकमभिसम्बध्यते। नुम्व्यवाये तावत्–सर्पींषि, यजूंषि,

हवींषि। विसर्जनीयव्यवाये–सर्पिःषु, यजुःषु, हविःषु। शर्व्यवाये–सर्पिष्षु, यजुष्षु, हविष्षु। नुमादिभिः□ प्रत्येकं व्यवाये षत्वमिष्यते न समस्तैः। तेनेह न भवति–निंस्से, निंस्स्व इति। णिसि चुम्बने इत्येतस्यैतद्रूपम्। अत्र हि नुमा सकारेण शरा च व्यवधानम्।

**अयं भावः –**

नुमादिव्यवधानेऽपि इण्कवर्गाभ्यां परस्य सकारस्य मूर्धन्यादेशो भवति इति सूत्रार्थः। नुमादिव्यवधाने क्रमेण सर्पींषि, सर्पिःषु, सर्पिष्षु इति नुमादिभिः□प्रत्येकं व्यवधाने षत्वं प्रतिपादितम्। अनेकव्यवधानेऽपि यदि षत्वं स्यात् तर्हि निंस्से इत्यादावपि षत्वं स्यादिति अनिष्टम् इति भावः।

**महाभाष्यम् –**

नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधः। नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधो वक्तव्यः। निंस्से, निंस्स्वेति। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। नुमैव व्यवाये, विसर्जनीयेनैव व्यवाये, शरैव व्यवाये इति। किं वक्तव्यमेतत्? न हि कथमनुच्यमानं गंस्यते? प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति। तद्यथा गुणवृद्धिसंज्ञे प्रत्येकं भवतः। ननु चायमप्यस्ति दृष्टान्तः –समुदाये वाक्यपरिसमाप्तिः। तद्यथा गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति। एवं तर्हि – योगविभागात्सिद्धम्। (योगविभागात्सिद्धमेतत्) योगविभागः करिष्यते। नुम्व्यवाये। ततो विसर्जनीयव्यवाये। ततः शर्व्यवाये। स तर्हि योगविभागः कर्तव्यः? न कर्तव्यः। प्रत्येकं व्यवायशब्दः परिसमाप्यते।

**अयं भावः –**

नुम्विसर्जनीयसूत्रे निंसेः प्रतिषेधो वक्तव्यः निंस्से इत्यादिसाधनाय खल्विति चेत् प्रत्येकं व्यवधानकथनेन प्रतिषेधकथनस्यापेक्षा नास्ति। प्रत्येकं वाक्ययपरिसमाप्तिन्यायेन एतदवगम्यते। समुदाये वाक्यपरिसमाप्तिन्यायेन पुनः दोषस्तदवस्थ एव खलु इति चेत् योगविभागेन संसाध्य सिद्धान्ते प्रत्येकं वाक्यपरिसमाप्तिन्यायेन समाधीयते इति भावः।

**प्रदीपः –**

निंसेरिति। यथा वृषलैर्न प्रवेष्टव्यमिति वृषलप्रवेशनिषेधपरत्वाद्वाक्यस्य प्रत्येकं सहितानां च प्रवेशाभाव एवं नुमादीनां षत्वाऽप्रतिबन्धहेतुत्वप्रतिपादनायोपादानात्प्रत्येकं समुदायेन च व्यवाये षत्वप्रसङ्गः[1]। नुमैवेति। एवमुच्यमानेऽनेकव्यवाये षत्वाऽप्रसङ्गः। ननु चायमिति। सर्वैश्च व्यवायाऽसम्भवाद्यथासम्भवं क्वचित्प्रत्येकं क्वचिद् द्वाभ्यां व्यवाये षत्वप्रसङ्गः[1]। एवं तर्हीति। योगविभागे सति द्वाभ्यां व्यवाये षत्वाऽभावः। इण्कोरिति पञ्चमीनिर्देशादान्तर्ये षत्वप्रतिपादनाद्योगत्रयेण चैकैकव्यवाये षत्वाऽभ्यनुज्ञानात्। प्रत्येकमिति। लक्ष्यदर्शनवशाल्लक्षणव्यवस्था ततश्चैद्वाक्योपायानि प्रक्रियावाक्यानि त्रीण्युपप्लवन्त इति योगविभागसाध्यफलसिद्धिः।

**अयं भावः –**

यथा वृषलैर्न प्रवेष्टव्यम् इत्युक्ते प्रत्येकं समुदायस्य च प्रवेशाभावः ज्ञायते तथात्रापि प्रत्येकं समुदायेन च व्यवाये षत्वप्राप्तिः इत्यर्थः। नुमैव व्यवाये इत्यादिकथनात् अनेकव्यवाये षत्वं न प्रसज्यते। समुदाये वाक्यपरिसमाप्तिन्यायस्वीकारेऽपि सर्वैः युगपद् व्यवायासमम्भवाद् यथासम्भवं क्वचित् प्रत्येकं क्वचित् द्वाभ्यां व्यावाये षत्वं प्रसज्यते। योगाविभागे सति द्वाभ्यां व्यवधाने षत्वं न भवति। इण्कोरिति पञ्चमीनिर्देशाद् आनन्तर्ये षत्वं प्रतिपादितम्। नुम्व्यवाये इत्यादियोगत्रयेण एकैकव्यवधाने षत्वमभ्युपगम्यते। लक्ष्यानुसारं लक्षणव्यवस्थेति कृत्वा योगविभागस्यापेक्षां विना प्रत्येकं वाक्यपरिसमाप्तिन्यायेन सर्वं सिद्धं भवतीति भावः।

**उद्योतनम् –**

ननु प्रत्येकव्यवाय एव निमित्तम्, नानेकव्यवाय इति कथमतिप्रसङ्गः, अत आह – यथा वृषलैरिति। वृषलप्रवेशविधिपरत्वे एकशेषावगतसाहित्यस्य विवक्षाशङ्कानिरासाय प्रवेशनिषेधपरत्वात् इत्युक्तम्। णिसि चुम्बने इदित्त्वान्नुम्, भथासः से, निंस्से। अत्र नुमा धातुसकारेण शरा च व्यवधानम्। तर्हि यजूंषि इत्यादावेकैकव्यवाये षत्वं न स्यात्। अत आह–सर्वैरिति। सर्वव्यवायस्य क्वाप्यसम्भवे वचनसामर्थ्याद्यथासम्भवं व्यवायोऽङ्गीक्रियत इत्यर्थः। नन्वत्र पञ्चमीनिर्देशाभावाद् द्वाभ्यां व्यवायेऽपि षत्वं स्यात्, अत आह–इण्कोरिति। सम्बन्धसामान्ये षष्ठी, पञ्चम्यर्थ एव तु विवक्षितः प्रत्ययेन। सुपां सुपो भवन्तीति वा पञ्चम्याः स्थाने षष्ठीत्यर्थः। ननु योगविभागाभावे वृषालैर्न प्रवेष्टव्यम् इतिवदनियमः स्यात्, अत आह लक्ष्यदर्शनेति।

**अयं भावः –**

सर्वव्यवधानस्य क्वाप्यसम्भवात् यथासम्भवं व्यवधानमङ्गीक्रियते। प्रकृतसूत्रे पञ्चमीनिर्देशाभावाद् द्वाभ्यां व्यवायेऽपि षत्वं स्यात्खलु इति चेत् इण्कोरित्यनेनाव्यवधाने, योगत्रयविभागेन एकैकव्यवधाने इति भावः।

**नारायणीयम् –**

ननु प्रत्येकं वाक्यपरिसमाप्तिः इति न्यायाश्रयणान्नुमादिभिः□ प्रत्येकं व्यवाये षत्वेन भवितव्यम् समुदायव्यवायासम्भवात्। अत्र तु णिसि चुम्बने इत्यादादिकस्य निंस्से इति थासः से इति से आदेशे रूपमिति नुमा शरा च प्रत्ययसकारस्य व्यवधानात् षत्वाभावस्य सिद्धत्वात् प्रतिषेधोऽनर्थक इत्याशङ्क्याह – यथा वृषलैरिति। अत एव णत्वविधौ व्यवायोपलक्षणार्थमडादीनामुपादानादेकेन द्वाभ्यां बहुभिश्च व्यवाये यथायोगं णत्वं भवति। उक्तं च –

वृषलैर्न प्रवेष्टव्यमित्येतस्मिन् गृहे यथा।
प्रत्येकं संहितानां च प्रवेशः प्रतिषिध्यते।।

सम्भूय त्वर्थलिप्सादिप्रतिषेधोपदेशने।
पृथगप्रतिषिद्धत्वात् प्रवृत्तिर्न विरुध्यते।।

व्यवायलक्षणार्थत्वादट्कुप्वाङादिभिस्तथा।
प्रत्येकं वा समस्तैर्वा णत्वं न प्रतिषिध्यते।। इति।

अत्र समुदाये वाक्यपरिसमाप्तिः इति न्यायाश्रयणेन प्रत्येकं व्यवाय इति नियमो नास्तीत्येतत् प्रतिपाद्यत इत्याह – सर्वैश्चेति। आनन्तर्य इति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्। एतद्वाक्योपायानि। एतत् प्रतिपत्तिवाक्यमुपायो येषां तानि तथा। नुम्विसर्जनीयशर्व्यवाये षत्वं भवतीत्येकवाक्यतया प्रथमं प्रतीयते। तत्र व्यवायशब्दस्य प्रत्येकं सम्बन्धात् तस्माद्वाक्यादनुष्ठानक्षमं वाक्यत्रयमुद्भवति–नुम्व्यवाये षत्वं भवति, तथा विसर्जनीयव्यवाये शर्व्यवाये चेति। तथा च विनापि योगविभागेन तत्फललाभात् निंस्से इत्यादौ षत्वप्रतिषेधसिद्धिः।

**अयं भावः –**

प्रत्येकं वाक्यपरिसमाप्तिरिति न्यायेन नुमादिभिः□प्रत्येकं व्यवाये षत्वं भवति समुदायव्यवधानासम्भवात्। निंस्से इत्यादौ नुमा शरा च प्रत्ययसकारस्य व्यवधानात् षत्वं न भवति। पुनः निषेधः कुत इति चेत् उच्यते। वृषलप्रवेशनिषधः प्रत्येकं संहिता च भवति यथा तथाऽत्रापि प्रत्येकं समुदये च वाक्यपरिसमाप्त्या द्वाभ्यां बहुभिश्च योगे ण्त्वं भवति इत्यर्थः। योगविभागेन विनापि प्रत्येकं वाक्यपरिसमाप्तिन्यायेन निंस्से इत्यादौ षत्वनिषेधसिद्धौ योगविभागस्यापेक्षा नास्ति इति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

212.आदेशप्रत्ययोः। (8–3–59) –वैयाकरणसिद्धान्तकौमुद्याम् अजन्तपुँल्लिङ्गप्रकरणे विराजते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे नवपञ्चाशत्तमं सूत्रं भवति। सहेः साडः स इति सूत्रात् स इति षष्ट्यन्तं पदमनुवर्तते।

वृत्तिः – इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्। विवृताघोषस्य सस्य तादृश एव षः। रामेषु। इण्कोः किम्? – रामस्य। आदेशप्रत्यययोः किम्? – सुपीः। सुपिसौ। सुपिसः। अपदान्तस्य किम्? हरिस्तत्र। एवं कृष्णमुकुन्दादयः।

व्याख्यानम् – इण्कोरित्यधिकारे वर्तते। सहेः साडः सः इत्यतस्स इत्यनुवर्तते। अपदान्तस्य मूर्धन्य इत्यधिकारो वर्तते। एवञ्च इण्कोः परस्य अपदान्तस्यादेशः प्रत्ययावयवश्च यः सकारः तस्य मूर्धन्यादेशो भवतीति तात्पर्यम्। आदेशश्च प्रत्ययश्च आदेशप्रत्ययौ। तयोः आदेशप्रत्यययोः। उदाहरणम् – रामेषु। रामे सु इत्यवस्थायां मकारोत्तरमेकार इण् वर्तते। ततः प्रत्ययावयवः सकारो वर्तते। तेन प्रकृतसूत्रेण सकारस्य षत्वे रामेषु इति रूपं सिध्यति। इण्कोरिति पदाभावे रामस्य इत्यवस्थायां स्येति प्रत्ययावयवसकारस्य षत्वं स्यात्। अत इण्कोरिति वक्तव्यम्। आदेश– प्रत्यययोरित्यभावे सुपीस् इति सकारः धातोर्वर्तते। न तु प्रत्ययस्य आदेशस्य वा। अतोऽनेन षत्वं स्यात्। तद्वारणाय तत्पदम्। अपदान्तस्येत्यभावे हरिस्तत्र इत्यत्र सकारस्य इणः परत्वेनानेन षत्वं स्यात्। तद्वारणाय तत्पदम्। एवञ्च दलप्रयोजनमप्युक्तम्।

**बालमनोरमा –**

आदेश। षष्ठ्यन्तमिति। सहेः साडः स इति सूत्रे स् इत्यस्मात् षष्ठ्येकवचने सति 'स' इति निर्दिष्टमिति भावः। तच्चेह द्विवचनान्ततया विपरिणम्य आदेशप्रत्यययोः इत्यत्र सम्बध्यते। ततश्च इण्कवर्गाभ्यां परयोरपदान्तयोरादेशात्मकप्रत्ययावयकात्मकयोः सकारयोर्मूर्धन्यः स्यादित्यर्थः। फलितमाह – इण्कवर्गाभ्यामित्यादिना। प्रौढमनोरमायां तु आदेशप्रत्यययोरित्येकापि षष्ठी प्रत्ययविषये अवयवार्थिका (आदेशविषये चाभेदार्थिका) तथा च आदेशस्य प्रत्ययावयवस्य च सकारस्येति लभ्यत इति प्रत्ययशब्दस्य लक्षणां विनोक्तम्। सहविवक्षाभावेऽपि सौत्रो द्वन्द्व इति च स्वीकृतम्। यदि तु आदेशविषयेऽपि अवयवषष्ठी स्याद् – आदेशावयवस्य सस्य ष इति तर्हि तिस्रः, तिसृणामित्यादौ दोषः। न च त्रिचतुरोः स्त्रियाम् इत्यत्रादेशे सकारोच्चारणसामर्थ्यान्न तत्र षत्वमिति वाच्यम्। तिस्र इत्यत्र 'न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्' इति षत्वनिषेधेन चरितार्थत्वात्। विसंविसमित्यादौ सकारस्य आदेशावयवतया षत्वापत्तेश्च, नित्यवीप्सयोः इत्याष्टमिकद्विर्वचनस्यादेशरूपताया वक्ष्यमाणत्वात्। प्रत्ययो यः सकारस्तस्येति व्याख्याने तु जिगीषुरित्यादावेव स्यात्, रामेषु इत्यादौ न स्यात्। अत आदेशः प्रत्ययावयवश्च यः सकारस्तस्येति व्याख्यातम्। प्रत्ययावयवलक्षणायां च हलि सर्वेषाम् इति निर्देशो लिङ्गम्। विवृताघोषस्येति। मूर्धन्यत्वम् ऋटुरषेष्वविशिष्टम्। विवृतत्वरूपाभ्यन्तरप्रयत्नवतः अघोषरूपबाह्यप्रयत्नवतश्च सकारस्य तदुभयात्मकः षकार एव भवतीत्यर्थः। टकारनिवारणायाद्यं विशेषणम्। ऋकारवारणाय द्वितीयम्। रामेष्विति। ननु सु इत्यस्य व्यपदेशिवद्भावेन सुबन्तत्वेन पदत्वात् सात्पदाद्योरिति षत्वनिषेधः स्यादिति चेन्न। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणादित्यलम्।

**अयं भावः –**

इणः कवर्गाद्वा परस्य आदेशरूपस्य प्रत्ययावयवस्य वा सकारस्य स्थाने षकारादेशो भवतीति सूत्रार्थः। प्रौढमनोरमायां तु एकापि षष्ठी विषयभेदाद्भिद्यते इति कृत्वा प्रत्ययविषये अवयवार्थिका आदेशविषये अभेदार्थिका च भवतीति लक्षणां विना अभीत्सितार्थः लभ्यते। आदेशविषये यदि अवयवषष्ठी स्वीक्रियेत तर्हि तिस्र इत्यादौ सकारस्य षत्वं स्यादवयवषष्ठीसत्त्वात्सकारस्य। प्रत्ययो यः सकारस्तस्य ष इत्युक्ते जिगीषुरित्यादावेव प्रत्ययसकारस्य षत्वं स्यात्। रामेषु इत्यादौ न स्यादत आदेशात्मकस्य प्रत्ययावयवस्य सकारस्य षकार इत्युच्यते। प्रत्ययावयवलक्षणास्वीकारे तु हलि सर्वेषाम् इति निर्देशः प्रमाणम्। सकारस्य मूर्धन्य इत्युक्ते आभ्यन्तरबाह्यसाम्यात् षकार एव भवति। रामे सु इत्यत्र सु इत्यस्य व्यपदेशिवद्भावेन सुबन्तत्वात्पदत्वे सात्पदाद्योरिति षत्वनिषेधः स्यात्खलु इति चेत् प्रत्ययग्रहणपरिभाषया सुबन्तत्वं न भवतीति भावः।

**तत्त्वबोधिनी –**

प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः, हलि सर्वेषाम् इति निर्देशात्। सात्पदाद्योः

इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे–आदेशः प्रत्ययावयवश्चेति। यदि तु आदेशावयवो गृह्येत तर्हि तिसृणामित्यादौ दोषः। यद्यपि सकारोच्चारणसामर्थ्यात्तत्र षत्वं न स्यात्, तथापि विसंविसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्यात्। आष्टमिकद्विर्वचनस्यादेशरूपत्वात्। यदि तु प्रत्ययो यः सकार इति गृह्येत, तर्हि रामेषु करिष्यतीत्यादौ न स्यात्, किं तु इन्द्रो मा वक्षत् इत्यादावेव स्यात्। इह मनोरमायामेकापि षष्ठी विषयभेदाद्भिद्यते इत्युक्त्वा सहविवक्षाभावेऽपि सौत्रत्वाद् द्वन्द्व इत्युक्तम्; तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम्। विवृताघोषस्येति। विवृतस्य सस्य तादृश एवेत्युक्ते ऋकारे अतिप्रसङ्गस्तद्वारणायाघोषस्येति। अघोषस्येतावदुच्यमाने ठकारेऽतिप्रसङ्ग स्तद्वारणायोभयमुपात्तम्। तादृश एव ष इति। तादृश ष एवोदशो भवति नान्य इत्यर्थः।

ननु दधिसेचौ दधिसेच इत्यादौ प्राक्सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तस्ततश्चेहापि सात्पदाद्योः इति निषेधः स्यात् करिष्यतीत्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवम्। स्वादिषु इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात्। रामस्येति। टाङ्सिङ्सामिनात्स्या इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेदिति, नडादिषु अमुष्येति निपातनात्ततः फगादौ आमुष्यायण... इत्यादिवार्तिकनिर्देशाच्च अमुष्येत्यत्र तु षत्वं भवेदिति यदि तर्हि विश्वपास्वित्यादि प्रत्युदाहर्तव्यम्। न च तत्रापि षुबिति वक्तव्ये सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यम्। लिट्सु, प्रशान्सु इत्यत्र ङः सि धुट्, नश्च इति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक्।

**अयं भावः –**

सूत्रे प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः हलि सर्वेषामिति निर्देशात्। सात्पदाद्योरिति सातिग्रहणाच्च लिङ्गादित्याशयः। अत एव साररूपेण अपदान्तस्यादेशः प्रत्ययावयश्चेत्यवाचि। आदेशावयवस्वीकारे तिसृणामित्यादौ दोषस्य सकारोच्चारणसामर्थ्यान्निराकृतेऽपि विसंविसमित्यादौ षत्वं प्राप्नोत्येव। अत आदेशरूप इत्यवाचि। दधिसेचौ इत्यादौ तु षत्वाभावः सात्पदाद्योरिति सूत्रेण। स च निषेधः स्वादिषु..

इति पदसंज्ञामाश्रित्य न प्रवर्तते। टाङसीति सूत्रे सकारोच्चारणसामर्थ्यात् पुनः 'स्य' इत्यत्र न षत्वमिति वक्तुं शक्यते। सप्तमीबहुवचने षुबिति वक्तव्ये सुबिति सकारोच्चारणसामर्थ्यादेव षत्वं न भवेदिति वक्तुं न शक्यते। यतः लिट्सु, प्रशान्सु इत्यादौ सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति भावः।

**प्रौढमनोरमा –**

एकापि षष्ठी विषयभेदाद्भिद्यते इत्याशयेन व्याचष्टे – आदेशः प्रत्ययावयवश्चेति। यदि तु आदेशावयवो गृह्येत तर्हि तिसृणामित्यादौ दोषः। यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात्। यद्यप्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहात् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद् बोध्यः। विवृताघोषस्येति। यत्तु वदन्ति – सकारस्य सोऽष्मणोऽघोषस्यान्तरतमः ष एष मूर्धन्य इति तन्न्यूनम्। एकारेऽतिप्रसङ्गात्। तथा च प्रातिशाख्यम् – 'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्य' इति। ननु दधिसेच इत्यादौ प्राक् सुबुत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तः। ततश्चेहापि सात्पदाद्योः इति निषेधः स्यादिति चेन्मैवम्। ''स्वादिषु'' इति या पदसंज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात्।

यत्त्वाहुः – प्रत्ययविषये नायं निषेध इति ज्ञाप्यत इति। तन्न। व्यतिसे इत्यादौ षत्वापत्तेः। ननु पदस्यातिरिति पक्षे व्यतिस इत्यत्र षत्वं दुर्वारम्। न च व्यपदेशिवद्भावेन से इत्यस्यापि तिङन्तत्वात् पदत्वं शङ्क्यम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेवग्रहणात्। अन्यथा रामेष्वित्यादावपि षत्वनिषेधापत्तिरिति चेत्सत्यम्। न वयं प्रत्ययमात्रस्य तदन्ततां ब्रूमः, किंतु प्रकृतिप्रत्ययसमुदाये प्रवृत्तां पदसंज्ञामेकदेशविकृतन्यायेन लुप्तप्रकृतिके प्रत्ययेऽप्यानयामः। रामौ रामा इत्यादावपि हि एकदेशविकृतन्यायेनैव पदत्वम्। एकादेशात्प्रागेव पदसंज्ञाप्रवृत्तेः। न त्वेकादेशे कृते सुप्तिङन्त.. इत्यस्य प्राप्तिरस्ति। उभयत आश्रयणे नान्तादिवत् इति सिद्धान्तात्।

यत्तु वदन्ति प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति। मन्त्रेषु, सर्वेषाम् इत्यादिनिर्देशादिति। तन्मन्दम्। उक्तरीत्या पदत्वाभावे न्यायसिद्धे ज्ञापनस्यासम्भवादनुपयोगाच्च।

**अयं भावः –**

तद्रूपः तदवयवय इति विषयभेदात् षष्ठी भिद्यते। आदेशायवयवः प्रत्ययरूपः यः सकारस्तस्य षत्वमिति चेत् क्रमेण तिसृणाम्, रामेषु दोषः स्यात्। सहविवक्षविरहेण द्वन्द्वसमासे सौत्रत्वाद् बोध्यः। दधिसेच इत्यादौ सात्पदाद्योरिति षत्वनिषेधः स्वादिषु इति पदसंज्ञामाश्रित्य न प्रवर्तते। प्रत्ययविषये अयं निषेधः न प्रवर्तते इति वक्तुं नैव शक्यते। यतः व्यतिसे इत्यादावपि प्राप्तेः। रामौ रामा इत्यादौ एकदेशविकृतन्यायेन पदत्वम्। पदसंज्ञा तु एकदेशात् प्रागेव भवति। एकादेशे कृते सुप्तिङन्तपदस्य प्राप्तिः नास्ति। उभयत आश्रयणे नान्तादिवत् इति सिद्धान्तात् इति भावः।

**लघुशब्देन्दुशेखरः –**

आदेश। प्रत्ययशब्दस्तदवयवयपरो व्याख्यानात्, सातेः षत्वनिषेधाल्लिङ्गाच्च। तदाह – प्रत्ययावयवेत्यादि। क्विृताघोषस्येति। विवृतरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्य– प्रयत्नवतश्चेत्यर्थः।

ठकारवारणाय आद्यम्, ऋकारवारणाय द्वितीयम्। रामस्येति। टाङसीति सूत्रे सकारोच्चारणं तु इण्कोरित्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः।

**अयं भावः –**

आदेशसूत्रे प्रत्ययशब्दः प्रत्ययावयवपरो व्याख्यानात्। सात्पदाद्योः इति षत्वनिषेधप्रमाणात्। सकारस्य स्थाने मूर्धन्य इत्युक्ते कः स्यादित्याकाङ्क्षायामाभ्यन्तरबाह्यसाम्यात् षकार एव भवतीति निर्णीतम् इति भावः।

**काशिकावृत्तिः –**

मूर्धन्य इति वर्तते; स इति च। आदेशप्रत्यययोः इति षष्ठीभेदेन सम्बध्यते। आदेशो यः सकारः, प्रत्ययस्य च यः सकार इण्कोरुत्तरः तस्य मूर्धन्यो भवति आदेशः। कर्तृषु। हर्तुषु। इन्द्रो मा वक्षत्, देवान्यक्षदिति व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति। यजादेर्वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचने इकारलोपः, लेटोऽडाटौ इत्याट्, सिब्बहुलं लेटि इति सिप्, ततः सिद्धम्–यक्षत्, वक्षत् इति।

**अयं भावः –**

षष्ठ्याः भेदेन सम्बन्धात् आदेशात्मकस्य प्रत्ययावयवस्य च सकारस्य षकारो भवति इण्कोरुत्तरस्येति सूत्रार्थः। आदेशस्य सिषेवेत्युदाहरणम्। प्रत्ययावयवस्य अग्निषु इत्युदाहरणम्। वक्षत् यक्षदित्यादौ व्यपदेशिवद्भावेन प्रत्ययावयवत्वात् षत्वं भवति इति भावः।

**महाभाष्यम् –**

आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधः। आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधो वक्तव्यः। कृसरः, धूसरः। अत्यल्पमिदमुच्यते 'सरक' इति। ''सरगादीनामिति वक्तव्यम्। इहापि यथा स्यात्–वर्सं तर्समिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। न वा एतत्षत्वे शक्यं विज्ञातुम् – उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति। इह हि न स्यात् – सर्पिषः, यजुष इति। एवं तर्हि – बहुलवचनात्सिद्धम्। बहुवचनात्सिद्धमेतत्। बहुलं प्रत्ययसंज्ञा भवति।

अथ किं पुनरियमवयवषष्ठी – आदेशस्य यः सकारः, प्रत्ययस्य यः सकार इति आहोस्वित् समानाधिकरणा – आदेशो यः सकारः, प्रत्ययो यः सकार इति। कश्चात्र विशेषः। आदेशप्रत्यययोरित्यवयवषष्ठी चेत् द्विर्वचने प्रतिषेधः। आदेशप्रत्यययोरित्यवयवषष्ठी चेद्द्विर्वचने प्रतिषेधो वक्तव्य। बिसं विसम्। मुसलं मुसलम्। समानाधिकरणानां चाप्राप्तिः। समानाधिकरणानां च षत्वस्याऽप्राप्तिः। एषः, अकार्षीत्। अस्तु समानाधिकरणा। यदि समानाधिकरणा सिषेच, सुष्वाप – अत्र न प्राप्नोति। न धातुद्विर्वचने स्थाने द्विर्वचनं शक्यमास्थातुम्। इहापि हि प्रसज्येत–सरीसृप्यत इति। तस्मात्तत्र द्विःप्रयोगो द्विर्वचनम्। इह तर्हि करिष्यति हरिष्यति– प्रययो यः सकारः इति षत्वं न प्राप्नोति। अस्तु तर्ह्यादेशो यः सकारः, प्रत्ययस्य यः सकारः इति। इह तर्हि – अकार्षीत् – प्रत्ययस्य यः सकार इति षत्वं न प्राप्नोति। मा भूदेवम्, आदेशो यः सकार इत्येवं भविष्यति।

इह तर्हि जोषिषत्, मन्दिषदिति – प्रत्ययस्य सकार इति षत्वं न प्राप्नोति। एषोऽपीटि कृते प्रत्ययस्य सकारः। इह तर्हि – इन्द्रो मा वक्षत्, स देवान्यक्षत्। नानाविभक्तीनां च समासानुपपत्तिः। नानाविभक्तीनां च समासो नोपपद्यते आदेशप्रत्यययोरिति। योगविभागात्सिद्धम्। योगविभागात्सिद्धमेतत्। योगविभागः करिष्यते। आदेशस्य षो भवतीति। ततः प्रत्ययस्य। प्रत्ययस्य सकारस्य षो भवतीति। स तर्हि योगविभागः कर्तव्यः। न कर्तव्यः । कथम्? अस्तु तावदवयवषष्ठी। ननु चोक्तमादेशप्रत्यययोरित्यवयवषष्ठी चेद्विर्वचने प्रतिषेध इति। नैष दोषः। द्विःप्रयोगो द्विर्वचनम्। यदप्युच्यते– समानाधिकरणानां चाप्राप्तिरिति। नैष दोषः। व्यपदेशिवद्भावेन भविष्यति। अथवा पुनरस्तु समानाधिकरणा। कथं करिष्यति, हरिष्यति? आचार्य– प्रवृत्तिर्ज्ञापयति, भवत्येवंजातीयकानां षत्वमिति, यदयं सात्पदाद्योरिति सात्प्रतिषेधं शास्ति। अथवा पुनरस्त्वादेशो यः सकारः, प्रत्ययस्य यः सकार इति। कथमिन्द्रो मा वक्षत्, स देवान्यक्षत्। व्यपदेशिवद्भावेन भविष्यति। स तर्हि व्यपदेशिवद्भावो वक्तव्यः। न वक्तव्यः। उक्तं वा। किमुक्तम्। तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थं, षत्वे चादेशसम्प्रत्ययार्थम्, अवचनाल्लोकविज्ञानात्सिद्धमिति। यदपि नानाविभक्तीनां च समासानुपपत्तिरिति। आचार्यप्रवृत्तिर्ज्ञापयति – नानाविभक्त्योरेष समास इति, यदयं शसिवसिघसीनां चेति घसिग्रहणं करोति। कथं कृत्वा ज्ञापकम्? यदि ह्यादेशस्य यः सकार इत्येवं स्याद्घसिग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यः – आदेशो यः सकारस्तस्य षत्वमिति, ततो घसिग्रहणं करोति।

**अयं भावः –**

कृसरधूसरादिषु उणादीनां प्रत्ययानां बहुलं प्रत्यसंज्ञासत्त्वात् प्रत्ययत्वाभावात् प्रकृते न षत्वम्। सर्पिष इत्यादौ प्रत्ययत्वात् षत्वमिति। आदेशप्रत्यययोः इत्यत्रावयवषष्ठी स्वीक्रियते। आदेशः य सकारः, प्रत्ययस्य यः सकार इति षष्ठ्या विषयभेदेन स्वीकारात् अकार्षीदित्यादौ इष्टसिद्धिर्भवति। शासिवसिसूत्रे घसिग्रहणात् आदेशस्य यः सकार इति नास्तीति भावः।

**प्रदीपः –**

कृसर इति। अशेः सरन्नित्यतः सरन्प्रत्ययः 'कृधूमादिभ्यः किदित्यत्रानुवर्तते। कित्त्वादतिदेशाच्च कित्कार्यलाभाद्भाष्यवार्तिकयोः सरक्पठितः। वर्तमिति। वृतृवदि.. इति सप्रत्ययः। उणादय इति। अबुधबोधनाय व्युत्पाद्यमाना अप्युणादयो व्युत्पत्तिनिमित्तं कार्यं न लभन्ते, अतः कृकमिकंसेत्यत्र पृथक्कसंग्रहणात्। न वै एतदिति। षत्वं व्युत्पत्तिहेतुकमुणादीनामवश्याभ्युपेयं सर्पिषा वृक्ष इत्यादिसिद्ध्यर्थमित्यर्थः। एवं तर्हीति। कृसरादिषु षत्वे कर्तव्ये प्रत्ययसंज्ञा न भवति। अथेति। अवयवषष्ठ्यामस्यां स इत्यस्यानुवृत्तस्य वचनविपरिणामो न कर्तव्यो भवति। कार्येण त्वादेशप्रत्यययोरसम्बन्धः सकारविशेषणत्वात्, सामानाधिकरण्ये त्वादेशप्रत्यययोः सकारयोरिति द्विवचनं विपरिणम्य, कार्येण त्वादेशप्रत्यययोश्चोदनाया अनुग्रह इति साम्यात्पक्षद्वयसम्भवः। विसं विसमिति। स्थाने द्विर्वचनमिति मत्वा दोषोपन्यासः। एष इति। एतदस्तकारस्य 'तदोः सः सावनन्त्ययोः' इति सकार आदेशो नादेशावयव इति षत्वं न प्राप्नोति। एवमकार्षीदित्यत्रादेशः प्रत्ययो वा सकारो न तु तदवयवः। सिषेचेति। स्थाने द्विर्वचन आदेशावयवः सकारो न त्वादेश इति षत्वाप्रसङ्गो यथा विसमित्यादौ। सरीसृप्यत इति। ननु समानाधिकरणपक्षे षत्वस्याऽत्राप्रसङ्ग उच्यते। सिषेचादिसिद्धये यदि व्यधिकरणपक्षे आश्रीयते तदा स्थाने द्विर्वचने सरीसृध्यत इत्यत्रापि प्राप्नोति। द्विःप्रयोगे त्वत्र न दोषः। सिषेचेत्यादौ तु धात्वादेः षः स इति य आदेशस्तस्य सामानाधिकरण्याश्रयेण षत्वं सिध्यति।

जोषिषदिति। लेट्। व्यत्ययेन परस्मैपदम्। तिप्। इतश्च लोप इत्यादिनेकारलोपः। लेटोऽडाटावित्यट्। सिब्बहुलं लेटीति सिप्। इति कृत इति। सागमकस्य प्रत्ययत्वात्तदवयवः सकारः। वक्षद्यक्षदिति। वचियजिभ्यां लेट्। नानाविभक्तीनामिति। आदेशस्येति षत्वापेक्षया स्थानषष्ठी, प्रत्ययस्येति सकारापेक्षयाऽवयवषष्ठीति सहविवक्षाऽभावाद् द्वन्द्वानुपपत्तिः। व्यपदेशिवद्भावेनेति। ननु सिप्सिचोरर्थस्य त्यागोपादानाभ्यां युक्तो व्यपदेशिवद्भाव इहागमभावभावाभ्यामनेकरूपत्वाद्वा। एष इत्यत्र तु सकारस्यानर्थक्यादयुक्तो व्यपदशिवद्भावः,स्यः,सः,एषोऽसाविति सकारसमुदायस्यादेशस्यैव इत्यत्र सकारोऽवयवो भवतीति षत्वं प्रवर्तते। यदयमिति। प्रत्ययावयवस्यापि सकारस्य षत्वं भवति न केवलं प्रत्ययस्य सकारस्येति प्रतिषेधेन ज्ञाप्यते। नानाविभक्त्योरिति। नन्वाचार्यस्यार्थेष्वभावात्कथं भिन्नप्रस्थानयोर्द्वन्द्वः। उच्यते एकविभक्त्योरयं द्वन्द्वो, नानाविभक्तितुल्यफलत्वान्नानाविभक्तिरुक्तः। साद्ग्रहणाद्धसिग्रहणाच्च नोभयत्र सामानाधिकरण्यं वैयाधिकरण्यं च। तत्र प्रत्ययावयववृत्तित्वात्प्रत्ययशब्दस्य सामानाधिकरण्येऽपि वैयधिकरण्यफललाभः□।

**अयं भावः –**

अशेः सरन् इत्यत्र भाष्यवार्तिकयोः कित्त्वातिदेशसिद्धये सरक्पठितः। वर्समिति वृधातोस्सप्रत्ययः। उणादयः अबुधबोधाय उक्ताः ते व्युत्पत्तिनिमित्तं कार्यं न लभन्ते। उणादिषु बहुलग्रहणात् कृसरादिषु षत्वे कर्तव्ये प्रत्ययसंज्ञा न भवति। विसंविसमित्यत्र स्थाने द्वित्वमित्याशयेन दोष उद्घाट्यते। अवयवषष्ठी स्वीकारे एष इत्यत्र आदेशावयवाभावात् न षत्वम्। अकार्षीदित्यत्र सकारः प्रत्ययावयव आदेशावयवो वा न। अतो न षत्वं स्यात्। एवं च शसिवसिसूत्रे घसिग्रहणात् नानाविभक्त्योरेष समास इति ज्ञायते। अत आदेशरूपं सकारः प्रत्ययावयवश्च इति भावः।

**उद्योतनम् –**

ननु सरनः इति वक्तव्यम्, सरकः इति कथम्, अत आह – अशेरिति। कृधूमादिभ्य इति। कृधूमादिभ्यः कित् इति सूत्रमर्थतः पठितम्, तथैव सूत्रन्यासो वा। वृतृवदिहनिकमिकषिभ्यः सः। उणादेर्वैयर्थ्यं निराह – अबुधेति। तत्र ज्ञापकमाह – अतः कृकमीति। कमेः सविधानात् कमिग्रहणेनैव सिद्धे कंसग्रहणेन व्युत्पत्तिनिमित्तकार्याभावो ज्ञाप्यत इत्यर्थः। स्नुवृश्चिकृत्यृषिभ्यः कित् इति सक्प्रत्ययान्तो वृक्षशब्दः। सर्पिरादावव्युत्पत्तौ षकारान्तत्वे सर्पिः, सर्पिर्भ्याम् इति न स्यात् षकारस्य रुत्वाभावात्। सकारान्तत्वे सर्पिषि इति षत्वं न स्यादिति व्युत्पन्नत्वमवश्यवाच्यम्। वृक्षशब्दस्याव्युत्पन्नत्वेऽपि रूपभेदाभावात् फिट्स्वरेणान्तोदात्तत्वेन स्वरभेदाभावाच्चाव्युत्पन्नत्वपक्षे नानिष्टमित्याहुः। प्रत्ययसंज्ञायां बहुलवचने प्रकृते सिद्धिमाह –कृसरादिष्विति। कोटिद्वयेऽपि गुणदोषसाम्यात् सन्देहोपपत्तिरित्याह – अवयवषष्ठ्यामिति। अवयवषष्ठीपक्षे आदेशप्रत्यययोः इत्यस्य साक्षात् कार्यान्वयाभावो दोषः, सः इत्यस्य द्विवचनान्ततया विपरिणामाभावो गुणः। पक्षान्तरे विपरिणामो दोषः, तयोः साक्षात् कार्यान्वयो गुण इति साम्यमित्यर्थः। द्विःप्रयोगो द्विर्वचनम् इति पक्षे आदेयावयवत्वाभावान्न प्रसङ्गः। अत आह – स्थाने द्विर्वचनमिति। आदेशः प्रत्ययो वेति। च्लेरादेशः, स्थानिवद्भावात् प्रत्ययः। समानाधिकरणपक्षे 'सिषेच' इत्यत्र षत्वाप्राप्तिमाह – स्थाने द्विर्वचन इति। स्थाने द्विर्वचनपक्षे सरीसृप्यते इत्यत्र षत्वप्रसङ्ग इत्युक्तम्। तत्रादेशायवयवः सकारो नादेशरूप इति समानाधिकरणपक्षे षत्वाप्रसङ्ग इति शङ्कते – ननु समानाधिकरणेति। आपाद्योत्तरत्वेन समाधत्ते – उच्यत इति। तर्हि समानाधिकरणपक्षे द्विःप्रयोगद्विर्वचनाङ्गीकारे 'सिषेच' इति षत्वं कथम्, अत आह

– सिषेचेत्यादाविति, जुषी प्रीतिसेवनयोः लघूपधगुणः, सिप इट्। सकार एव प्रत्ययः, तस्यागम इडिति कथं प्रत्ययावयवत्वम्। अनागमकानां सागमका आदेशा इति पक्षे तु सेट एव प्रत्ययत्वमित्यर्थः। अत्र सेट एव प्रत्ययत्वादादेशत्वाच्चादेशो यः सकार इत्यप्यङ्गीकारेऽत्र षत्वाप्रसङ्गो ज्ञेयः। यक्षत् इत्यादाविडभावात् प्रत्ययावयवत्वं नास्ति। समानाधिकरणपक्षे त्वत्र षत्वं भवत्येव। ननु सः इति षष्ठ्यन्तसकारविशेषणस्यादेशशब्दस्य षष्ठन्तत्वात् प्रत्ययशब्दस्याप्यवयवषष्ठ्यन्तत्वात् कथं नानाविभक्तित्वम्, अत आह – आदेशस्येति।

विभज्यत इति कर्मण्युत्पन्नस्य विभक्तिशब्दस्य षष्ठयर्थः परत्वात् 'तस्य नानात्वे सहविवक्षाया अभावात् समासानुपपत्तिरित्यर्थः। एष इत्यत्र व्यपदेशिवद्भावानुपपत्तिं वक्तुमन्यत्र तत्सम्भवमाह – ननु सिप्सिचोरिति। शब्दार्थसमुदायोऽवयवी, तस्यावयवः शब्द इति व्यपदेशः सम्भवति। अर्थापुरस्कारेऽपि तत्र व्यपदेशिवद्भावोपपत्तिमाह – इडागमेति। इट् सहिततद्रहितसकारसमुदायस्य तद्रहितोऽवयव इति व्यपदेशसम्भव इत्यर्थः। आनर्थक्यादिति। अनेकरूपत्वाभावाच्चेत्यपि द्रष्टव्यम्। अर्थवतो व्यपदेशिवद्भाव इत्यत्र भाष्यसंवादमाह तथा चोक्तमिति। एवं तर्हीति। तदोः सः सौ इति विहितसकारस्यानेकशब्दसम्बन्धिनोऽनेकत्वात् समुदायस्यावयव एतच्छब्दसकार इति व्यपदेशोपपत्तिरित्यर्थः। समानाधिकरणपक्षे प्रत्ययसकारस्य सूत्रेणैव षत्वे सिद्धे प्रत्ययावयवस्यापि षत्वं ज्ञापकेन सिध्यति, अप्रसक्तस्य प्रतिषेधासम्भवादित्याह – प्रत्ययावयवस्यापीति। एतेन सूत्रस्यैवावयवषत्वविधायकत्वं निषेधेन ज्ञाप्यत इति शङ्का निरस्ता, इष्टसिद्ध्यर्थत्वाद् ज्ञापकस्य। नन्वाचार्यस्येति। प्रयुक्तानामिदमन्वाख्यानम्, नानाविभक्त्योर्द्वन्द्वो लोके नास्तीत्येतद् ज्ञापयितुं शक्यते इति चोद्यार्थः। उच्यत इति। अत्राप्येकविभक्त्योरेव द्वन्द्वः। नानाविभक्त्योः इति भाष्यं तु फलाभिप्रायमित्यर्थः। नन्वेकविभक्तित्वे सामानाधिकरण्यं वैयधिकरण्यं वैकं ग्राह्यम्। तत्रोक्तदोषानतिवृत्तिः, अत आह – साद्ग्रहणादिति। साद्ग्रहणं प्रत्ययवैयधिकरण्यस्य ज्ञापकम्। घसिग्रहणमादेशसामानाधिकरण्यस्य। अतोऽत्र सामानाधिकरण्यं वैयधिकरण्यं चोभयं गृह्यत इति नोक्तदोष इत्यर्थः। तर्हि कथमेकविभक्तित्वम्, अत आह – तत्र प्रत्ययेति। प्रत्ययशब्दः प्रत्ययावयवेऽभेदोपचारेण वर्तते। ततश्चोभयत्रापि स्थानषष्ठ्येवेत्येकविभक्तित्वं भिन्नविभक्तिफलं च प्रत्ययावयवस्य स्थानित्वं लभ्यत इत्यर्थः।

**अयं भावः –**

अतः कृकमिसूत्रे कमेः सविधानात् कंसशब्दे सिद्धे पुनः कंसग्रहणमुणादीनामव्युत्पत्तिपक्षं ज्ञापयति। विसं विसंमित्यत्र स्थाने द्विर्वचनपक्षे दोषः। परन्तु द्विःप्रयोगो द्विर्वचनमिति पक्षे आदेशावयवत्वाभावान्न प्रसङ्गः। सात्पदाद्योरिति प्रत्ययवैयधिकरण्यस्य ज्ञापकम्। शासिवसिसूत्रे घसिग्रहणम् आदेशसामानाधिकरण्यस्य ज्ञापकमिति भावः।

**नारायणीयम् –**

ननूणादिषु सरक्प्रत्ययो न दृश्यते, सरन्नेव तु विद्यत इति किमुच्यते सरकः, प्रतिषेध इति, तत्राह – अशेः सरन्निति। ननूणादीनां व्युत्पत्तिमभिधायाव्युत्पन्नत्वकथनमसमञ्जसमित्यत आह – अबुधेति। वृक्ष इत्यादीति। ओव्रश्चू छेदने इत्यस्मात् धातोः वृतृवदिहनिकमिकषिभ्यः स इत्यतः स इत्यनुवर्तनात् स्नुवृश्चिकृत्यृषिभ्यः कित् इत्यनेन सप्रत्ययः। कित्त्वात् सम्प्रसारणम्, स्कोः संयोगाद्योः

इति सलोप, कुत्वम्, प्रत्ययसकारत्वात् षत्वम्, आदिशब्देन अशेर्देवने अक्षः, ऋक्षः इत्यादयः संगृह्यन्ते। कृसरादिष्विति। अत्र षत्वादर्शनाद् बहुलवचनेन प्रत्ययत्वाभावः कल्प्यत इत्यर्थः। अत्र युक्तितो विमर्शे पक्षद्वयस्य समानत्वात् प्रश्नानुपपत्तिं दर्शयति – अवयवषष्ठ्यामिति। क्वचित् पक्षे मुख्यस्यैव ग्रहणम्, क्वचिदमुभयस्यैव यदि भवेत् यदा तदा गौणमुख्यन्यायेन मुख्यस्यैव ग्रहणात् कोट्यन्तराभावात् सन्देहो न स्यात्। अत्र तु पक्षद्वयेऽपि किञ्चिन्मुख्यम्, किञ्चिदमुख्यम्, अतः प्रश्न उपपद्यत इत्यर्थः। कार्येण त्विति। श्रुतयोरेव कर्येण सम्बन्धो युक्तः, स त्वत्र नास्तीत्यमुख्यत्वमित्यर्थः। स्थाने द्विर्वचनमिति। ततश्चादेशावयवत्वात् सकारस्य षत्वप्रसङ्गः। आदेशः प्रत्ययो वेति। च्लेः सिजादेशविधानादादेशत्वम्, स्थानिवद्भावात् प्रत्ययत्वम्। ननु समानाधिकरणेति। समानाधिकरणपक्षं प्रकृत्यैतदुक्तम्। तत्र च सरीसृप्यते इत्यत्र स्थाने द्विर्वचने सकारस्यादेशरूपत्वाभावात् षत्वाप्रसङ्ग इत्यर्थः। ननु द्विष्प्रयोगे सिषेच इत्यादिः सुतरां न सिध्यतीत्यत्राह – सिषेचेत्यादाविति। जोषिषत् इत्यादौ सकारस्य प्रत्ययत्वं दर्शयितुमाह– लेडिति। सागमकस्येति। इट् प्रत्ययभक्तत्वात्। सहविवक्षाभावादिति। तुल्यजातीयानामेव हि सहविवक्षा युक्ता, न तु भिन्नजातीयानाम्। यथा वृक्षश्च वृक्षश्च वृक्षौ तिष्ठतः, प्लक्षश्च न्यग्रोधश्च 'प्लक्षन्यग्रोधौ शोभनौ इति।

न हि प्लक्षस्तिष्ठति न्यग्रोधं पश्य इत्यत्र सहविवक्षाऽस्ति। अमुख्यो व्यपदेशो व्यपदेशिवद्भावः, स तु एष इत्यादौ निमित्ताभावादयुक्त इत्याशङ्क्य तत्रापि निमित्तसद्भावं दर्शयति – ननु सिप्सिचोरिति। प्रत्ययावयवस्यापीति। सातिसकारस्याप्रत्ययत्वात् प्राप्त्यभावात् प्रतिषेधोऽनर्थक एव स्यात्। कृतस्तु प्रत्ययस्य विधीयमानं षत्वं गौण्या वृत्त्या प्रत्ययावयवस्यापि भवतीति ज्ञापयतीत्यर्थः। तुल्यफलत्वमुपपादयति – साद्ग्रहणादिति। साद्ग्रहणादुभयत्र सामानाधिकरण्यमनुपपन्नम्। घसिग्रहणादुभयत्र वैयधिकरण्यानुपपत्तिः। घसेरादेशत्वादेव तदवयवस्य सकारस्यानेनैव षत्वस्य सिद्धत्वादानर्थक्यप्रसङ्गात्। तत्र का गतिरित्यत्राह – तत्र प्रत्ययावयवेति।

**अयं भावः –**

वृक्ष इति शब्दः व्रश्च्धातोः सप्रत्यये निष्पन्नः। कृसरादिषु षत्वस्यादर्शनात् बहुलग्रहणेन प्रत्ययत्वाभावः कल्प्यत इत्यर्थः। विसं विसमित्यादौ स्थाने द्विवर्चनमिति पक्षे आदेशायवयत्वात् सकारस्य षत्वं प्रसज्येत इत्यर्थः। स्थाने द्विर्वचनपक्षे सरीसृप्यते इत्यत्र सकारस्य आदेशरूपत्वं नास्तीति कारणेन षत्वं न भवति। सात्पदाद्योरिति सूत्रे साद्ग्रहणदुभयत्र सामानाधिकरण्यमनुपपन्नम्। घसिग्रहणादुभयत्र वैयधिकरण्यानुपपत्तिः इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

अत्रैकापि षष्ठी विषयभेदाद् भिद्यते। तेनादेशस्याभेदसम्बन्धेन प्रत्ययस्य चावयवावयविभावसम्बन्धेन सकारेऽन्वयः। तुल्यवदेकान्वयरूपसहविवक्षा– विरहेऽपि सौत्रो द्वन्द्व इति केचित्। प्रत्ययपदं तदवयवे लाक्षणिकम्। अत उभयोरप्यभेद एव संसर्ग इत्यन्ये। भाष्यकृतस्तु उभयोरपि भेदेनान्वयः। नन्वादेशावयवस्य सस्य षत्वविधाने विसं विसं, मुसलं मुसलमित्यादावतिप्रसङ्गः, स्थाने द्विर्वचनपक्षे समुदायस्यादेशतया तदवयवसकारसत्त्वात्। आद्ये तदोरिति दस्य सः। अन्त्ये च्लेः एवं जोषिषत्, मन्दिषदित्यादौ सकारस्य प्रत्ययरूपतया तदवयवत्वाभावात् षत्वं न स्यात्। न चात्र इटि कृते प्रत्ययावयवत्वसौलभ्यम्, तथापि इन्द्रो मा वक्ष्यत्,

स देवान्यक्ष्यत् इत्यादौ इडभावे दोषसत्वात् आदेशस्य प्रत्ययस्येति योगद्वयकल्पने च गौरवमिति चेन्न, द्विःप्रयोगो द्विर्वचनमिति सिद्धान्तात् विसं विसमित्यादावतिप्रसङ्गाभावात् एष इत्यादौ च व्यपदेशिवद्भावादप्रसङ्गस्याप्यभावात्।

यद्वा उभयत्राप्यभेदेनान्वयः। नन्वेवं सिषेव, सुष्वापेत्यादौ अप्रसङ्गः। स्थाने द्विर्वचनपक्षे आदेशावयवत्वादेशरूपत्वाभावात्। न च धातुद्विर्वचनं द्विप्रयोगः, अन्यथा सरीसृप्यते इत्यत्र षत्वप्रसङ्गात्। तथा च धात्वादेः षः स इति सकारस्यादेशरूपत्वमस्त्येवेति वाच्यम्, तथापि करिष्यतीत्यादौ प्रत्ययावयवस्य सकारस्य प्रत्ययरूपत्वाभावात् षत्वानापत्तेः। मैवम्, सात्पदाद्योरिति सात्प्रत्ययस्य षत्वनिषेधेन प्रत्ययावयवस्यापि षत्वमिति ज्ञाप्यत्वात्। यद्वा आदेश इत्यभेदेन प्रत्यय इति भेदेन सकारे विशेषणम्। न च नानाविभक्तीनां समासानुपपत्तिः सौत्रत्वात्सिद्धेः। अत एव शासिवसीत्यत्र घसिग्रहणं सङ्गच्छते। आदेशावयव इत्यर्थे हि घसेरादेशत्वादनेनैव सिद्धं स्यादित्याहुः। अतो दीक्षितोक्तमेव युक्तम्, भाष्यानुगुणत्वात्। प्रत्ययावयवलक्षणादिना अविवक्षदित्यादौ व्यपदेशिवद्भावस्यैव शरणीकर्तव्यत्वात्।

प्रकृतमनुसरामः – आदेशावयवस्य प्रत्ययावयवस्य च इण्कवर्गाभ्यां परस्य अपदान्तस्य सस्य मूर्धन्यः स्यात्। स्थानप्रयत्नोभयान्तरतम्यात् षकारः। एषः। करोषि। शक्ष्यति। आदेशेत्यादि किम्? पिस गतौ पेसति। तुस खण्डने तोसति। त्वक्सारः। इण्कवर्गाभ्यां किम्? रामस्य। अपदान्तस्य किम्? हरिस्तत्र।

**अयं भावः –**

षष्ठ्या विषयभेदात् आदेशस्याभेदसम्बन्धेन प्रत्ययस्य अवयवावयविभावसम्बन्धेनान्वयो भवति सकारे। तदा सहविवक्षाविरहात् द्वन्द्वेऽप्राप्ते सौत्रत्वाद् द्वन्द्वो बोध्यः। भाष्यकृता तु उभयोरपि भेदेनान्वय इत्यत्र तात्पर्यमुक्तम्। आदेशावयवस्य षत्वकथेन विसं विसमित्यादौ षत्वप्रसङ्गः। एषः, अकार्षीदित्यादौ अप्रसङ्गः। अत आदेशात्मक एवार्थः स्वीकर्तव्यः। द्विः प्रयोगो द्विर्वचनमिति भाष्यसिद्धान्तः। सात्पदाद्योरिति सात्प्रत्ययस्य षत्वनिषेधेन प्रत्ययावयवस्य अपि षत्वं ज्ञाप्यते। अथवा आदेश इति अभेदेन सकारे विशेषणम्, प्रत्यय इति भेदेन सकारे विशेषणम्। एवञ्च आदेशरूपः प्रत्ययावयवश्च स इत्येव युक्तमित्यभिप्रायः।

**वैयाकरणसिद्धान्तकौमुदी –**

2410.शासिवसिघसीनां च (8–3–60) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे षष्टितमं सूत्रं विद्यते।

**वृत्तिः** – इण्कुभ्यां परस्यैषां सस्य षः स्यात्। ऊषतुः। ऊषुः।

**व्याख्यानम्** – इण्कवर्गाभ्यां परस्य शास्धातोः वस्धातोः घस्धातोः आदेशस्य वा सस्य षः स्यात् इत्यर्थः। उदाहरणम् – ऊषतुः। वस्धातोः लिटि प्रथमपुरुषद्विवचने इदं रूपम्। ऊस् अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे शासिवसीति प्रकृतसूत्रेण षत्वमुच्यते। तत

ऊषतुसिति जाते रुत्वविसर्गयोः ऊषतुः इति रूपं सिध्यति। घसीतिशब्देन घस्लृ इत्यादेशोऽपि वर्तते लुङ्सनोर्घस्लृ इति विधीयमानः। घस्लृ अदने इति भौवादिको धातुरपि वर्तते।

**बालमनोरमा –**

किति तु वचिस्वपि इति सम्प्रसारणे कृते द्वित्वादौ ऊस् अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे शासिवसि। सहेः साडः स इत्यत स इति षष्ठ्यन्तमनुवर्तते। इण्कोः इति अपदान्तस्य मूर्धन्य इति चाधिकृतम्।

**अयं भावः –**

ऊषतुः इति सिद्धिये शासिवसीति सूत्रमारब्धम्। अत्र इण्कोः, सः, अपदान्तस्य मूर्धन्य इति च अनुवर्तते। तेन इण्कवर्गाभ्यामित्याद्यर्थः सिध्यतीति भावः।

**तत्त्वबोधिनी –**

धातुसकारस्याप्राप्ते विधिरयम्। ननु सुपिसौ सुपिस इत्यादावति प्रसङ्गवारणाय धातोः सकारस्य चेदेषामेवेति नियमार्थतां स्वीकृत्य आदेशप्रत्यययोरिति सूत्रं त्यज्यतामिति चेत्। अत्राहुः – आदेशावयवस्य षत्ववारणाय आदेशस्येत्यंशस्तावदावश्यकः। तद्ग्रहणे कृते धातुभिन्नसकारस्य चेद्भवति आदेशरुपस्यैवेति निपमप्रसङ्गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति।

**अयं भावः –**

धातुसकारस्य केनापि षत्वेऽप्राप्ते विधिरयमारब्धः।

पूर्वपक्षः – सुपिसौ, सुपिस इत्यादौ षत्वप्रसङ्गवारणाय धातोः सकारस्य यदि षत्वं तर्हि शासिवसिघसीनामेवेति नियमार्थमादृत्य आदेशप्रत्यययोरिति सूत्रं मास्तु इति। सिद्धान्तः –आदेशावयवस्य षत्ववारणायादेशपदमावश्यकम् आदेशग्रहणे कृते धातुभिन्नसकारस्य षत्वं चेद्भवति तर्हि आदेशरूपस्यैवेति नियमवारणाय प्रत्ययपदमप्यावश्यकमेवेति तत्सूत्र– मावश्यकमिति भावः।

**लघुशब्देन्दुशेखरः –**

आदेशप्रत्ययत्वाभावाद् अप्राप्ते विधिरयम्। शासिद्वयमप्यत्र गृह्यते आशिषि लिङ् इत्यादिनिर्देशात्।

**अयं भावः –**

शास्यादीनामादेशप्रत्ययत्वाभावात्षत्वेऽप्राप्ते प्रकृतसूत्रेण षत्वमारभ्यते। शासीतिशब्देन शासु अनुशिष्टौ, आङः शासु इच्छायाम् इति धातुद्वयमपि गृह्यते इति भावः।

**काशिकावृत्तिः –**

शासि, वसि, घसि – इत्येतेषां च इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। शिष्टा, शिष्टवान्। वसि–उषितः, उषितवान्, उषित्वा। घसि–जक्षतुः, जक्षुः। घसिभसोः–इत्युपधालोपः। अक्षन् पितरोऽमीमदन्त पितरः। अनादेशार्थं वचनम्। घसिर्यद्यप्यादेशः, सकारस्त्वादेशो न भवति। इण्कोः इत्येव शास्ति। वसति, जघास।

**अयं भावः –**

इण्कोरुत्तरस्य शसिवसिघसीनां सकारस्य मूर्धन्यः षकारदेशो भवति। आदेशभिन्नसकारस्य षकारविधानायेदं सूत्रम्। यद्यपि घसादेशः। परन्तु सकार आदेशो न इति उक्तं सङ्गच्छत इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

एषामिण्कुभ्यां परस्य सस्य षः स्यात्। शिष्टः। शास इदङ्हलोरितीत्वम्। उषितः। वचिस्वपीति सम्प्रसारणम्। जक्षतुः। गमहनेत्युपधालोपः। धातुसकारे पूर्वेणासिद्धावरम्भः□।

**अयं भावः –**

धातुसकारस्य। आदेशेति सूत्रेण आप्राप्ते षत्वे इदं सूत्रमारभ्यते। एषां शास्यादीनां परस्य सस्य षः स्यादिति सूत्रार्थः।

**वैयाकरणसिद्धान्तकौमुदी –**

2627.स्तौतिण्योरेव षण्यभ्यासात्। (8–3–61) – वैयाकरणसिद्धान्तकौमुद्यां सन्प्रकरणे इदं सूत्रमस्ति। अष्टाध्यायाम् अष्टमाध्यायस्य तृतीयपादे एकषष्टितमं सूत्रं वर्तते।

वृत्तिः – अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य। तुष्टूषति। द्युतिस्वाप्योः इत्युत्वम्। सुष्वापयिषति। सिषाधयिषति। स्तौतिण्योः किम्? – सिसिक्षति। उपसर्गात्तु स्वादिष्वभ्यासेन च इति षत्वम्। परिषिषिक्षति। षणि किम्? – तिष्ठासति। सुषुप्सति, अभ्यासादित्युक्तेर्नेह निषेधः। इण् – प्रतीषिषति। इक् – अधीषिषति।

व्याख्यानम् – अभ्यासे विद्यमानाद् इणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि परे नान्यस्य सकारस्य षः। उदाहरणम् – तुष्टूषति। स्तुधातोः सनि द्वित्वे अभ्यासलोपे तु स्तूषति इत्यवस्थायां प्रकृतसूत्रेण निमित्तसत्त्वात् स्तू इत्यत्र सकारस्य षत्वं भवति। स्तौतिण्योरेवेति कथनात् सेक्तुमिच्छतीत्यर्थे सिसिक्षति इत्यत्र द्वितीयसकारस्य न षत्वम्। षणीत्यभावे तिष्ठासतीत्यत्रापि षत्वं स्यात्। षकारयुक्तसनोऽभावात् न षत्वम्।

**बालमनोरमा –**

स्तौतिण्योरेव। षणीति कृतषत्वस्य सनो ग्रहणम्। अपदान्तस्य मूर्धन्य इत्यधिकृतम्। इण्कोः इति च। तत्र कुग्रहणं निवर्तते असम्भवात्। णिग्रहणेन तदन्तग्रहणम्। सहेः साडः स इत्यतः स इति

षष्ठ्यन्तमनुवर्तते, तदाह अभ्यासेण इत्यादि। षभूते इति। षकारं प्राप्ते सनीत्यर्थः। नान्यत्रेति। अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्यर्थः। न च आदेशप्रत्यययोः इत्येव सिद्धे आरम्भसामर्थ्यादेव नियमलाभाद् एवकारो व्यर्थः इति शङ्क्यम्, षण्येवेति नियमनिरसनार्थत्वात्। षण्येवेति नियमे सति तुष्टावेत्यत्र षत्वानापत्तेः। स्तौतेरुदाहरति तुष्टूषतीति। अज्झन.. इति दीर्घः। ण्यन्तस्योदाहरिष्यन्नाह–द्युतीति। उत्त्वमिति। वकारस्य सम्प्रसारणमुकार इत्यर्थः। सुष्वापयिषतीति। स्वपेर्णौ उपधावृद्धौ स्वापि इत्यस्मात् सनि इटि वकारस्य सम्प्रसारणे पूर्वरूपे सुप इत्यस्य द्वित्वे णेर्गुणेऽयादेशे सनः षत्वे अभ्यासेणः परस्य षत्वमिति भावः। सिषाधयिषतीति। अत्रापि ण्यन्तत्वादभ्यासेणः परस्य सस्य षत्वमिति भावः।

**अयं भावः –**

षणीति कृतषत्वस्य सनो ग्रहणं सप्तम्याम्। इण्कोरित्यतः केवलमिण् ग्रहणमनुवर्तते कोरसम्भवात्। षभूते सनि इत्युक्ते षकारं प्राप्ते सनीत्यर्थः। आदेशप्रत्ययेति सिद्धे पुनरारभ्यमाणोऽयं विधिः नियमाय भवतीति एवकारस्सूत्रे षण्येवेति नियमनिराकरणाय इति भावः।

**तत्त्वबोधिनी –**

स्तौतिण्योरेव। एवञ्च सिषाधयिषेति प्रयोगस्य साधुत्वं न तु सिसाधयिषेत्यस्येति ज्ञेयम्। उपसर्गात्त्विति। मध्येपवादन्यायात् स्तौतिण्यो.. इति नियमेन आदेशप्रत्यययोः इति षत्वमेव बाध्यते, न तु स्थादिष्वभ्यासेन च इत्युत्तरेण विहितमिति भावः।

**अयं भावः –**

ण्यन्तस्य सस्य षत्वविधानात् सिषाधयिषा इति रूपं न तु सिसाधयिषा इति। मध्येऽपवादन्यायेन स्तौतिण्योरिति नियम आदेशप्रत्ययेति नियमं बाधते न तु स्थादिष्विति नियमम् इति भावः।

**लघुशब्देन्दुशेखरः –**

एवकार इष्टतोऽवधारणार्थः। अन्यथा षण्येवेति नियमः स्यात्। तथा च तुष्टाव इति न स्यात्। सानुबन्धकषणीति किम्? सुषूष इह। उपसर्गान्त्विति। स्तौतिण्योः इति नियमेन मध्येऽपवादन्यायबलाद् आदेशप्रत्यययोः इति षत्वमेव बोध्यते इति भावः। सोषुप्यतेः सनि सोषुपिषते इत्यादौ तु षत्वं भवत्येव। प्रत्यासत्त्या सनि योऽभ्यासस्तस्माद् या प्राप्तिस्तस्या एव नियमेन व्यावृत्तेः। अयन्तु यङ्निमित्तोऽभ्यासः।

**अयं भावः –**

सूत्रे एवकार इष्टतोऽवधारणार्थः। षण्येवेति नियमः स्याद्। तदा तुष्टावेत्यादौ न स्यात्। षे परे इति कथनापेक्षया षणि इति कथनात् सुषूष इति अत्र षत्वं न स्यादिति भावः।

**महाभाष्यम् –**

स्तौतिणिग्रहणं किमर्थम्? अस्तौतिण्यन्तानां मा भूत् – सिसिक्षति। अथैवकारः किमर्थः। एवकारो नियमार्थः। स्तौतिण्यन्तानामेव नान्येषामिति। नैतदस्ति प्रयोजनं, सिद्धे

विधिरारभ्यमाणोऽन्तरेणैवकारकरणं नियमार्थो भविष्यति। इष्टतोऽवधारणार्थस्तर्हि। तथैवं विज्ञायेत स्तौतिण्योरेव षणीति। मैवं विज्ञायि – स्तौतिण्योः षण्येवेति। इह न स्यात्–तुष्टाव। अथ षणीति किमर्थम्? सेषीव्यते। को विनतेऽनुरोधः? अविनते नियमो मा भूत् सुप्सतीति। कः सानुबन्धेऽनुरोधः? षशब्दमात्रे नियमो मा भूत् –– सुषुपिष इन्द्रम्। सुषुपिष इहेति। अभ्यासादिति किमर्थम्? अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यादुपसर्गाद्या प्राप्तिस्तस्या नियमो मा भूत्––– अभिषिषिक्षति। नैतदस्ति, असिद्धमुपसर्गात्षत्वम्। तस्यासिद्धत्वान्नियमो न भविष्यति। इदं तर्हि प्रयोजनं, सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या नियमो यथा स्याद्यङि योऽभ्यासस्तस्माद्या प्राप्तिस्तत्र नियमो मा भूत्––सोषुप्यतेः सन् सोषुपिषते। अथवा अभ्यासाद्या प्राप्तिस्तस्य नियमो यथा स्याद्धातोर्या प्राप्तिस्तस्या नियमो मा भूत्–– अधीषिषति प्रतीषिषतीति। ननु च षणीत्युच्यते, षणीति नैषा परसप्तमी शक्या विज्ञातुम्। सन्यङन्तं हि द्विरुच्यते, तस्मादेषा सत्सप्तमी षणि सतीति। सत्सप्तमी चेत्प्राप्नोति।

**अयं भावः –**

सूत्रे स्तौतिणिग्रहणस्य प्रयोजनं सिसिक्षति इत्यादौ तद्भिन्नधातोः न भवेदिति षत्वम्। एवकारः कुत्रान्वेति सूत्रे इति चेत् स्तौतिण्यन्ताभ्यामित्यर्थः। अन्यथा षत्ण्येवेत्यन्वये तुष्टावेत्यादौ षत्वं न स्यात्। षणीति दलस्य सेषीव्यते इत्यादौ षत्वसिध्यर्थम् इति। अभ्यासादित्यस्य प्रयोजनम् अभ्यासान्नियमः स्यात् न तु उपसर्गात्। सूत्रे षणीति परसप्तमी नास्ति। अपि तु सत्सप्तमीत्यर्थः।

**काशिकावृत्तिः –**

स्तौतेर्ण्यन्तानां च षभूते सनि परतः अभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति। तुष्टूषति। ण्यन्तानाम् – सिषेवयिषति। सिषञ्जयिषति। सुष्वापयिषति। 'सिद्धे सत्यारम्भो नियमार्थः' – स्तौतिण्योरेव षण्याभ्यासाद्यथा स्यात्, अन्यस्य मा भूत् – सिसिक्षति। सुसूषति। एवकारकरणमिष्टतोऽवधारणार्थम्। स्तौतिण्योः षण्येव – इति हि विज्ञायमाने तुष्टावेत्यत्र न स्यात्। इह च स्यादेव। सिसिक्षतीति। षणीति किम्? अन्यत्र नियमो मा भूत् – सुषुप्सति। तिष्ठासति। कः सानुबन्धेऽनुरोधे। षशब्दमात्रे नियमो मा भूत् – सुषुपिष इन्द्रम्। अभ्यासादिति किम्? अभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोर्या प्राप्तिस्तस्या नियमो मा भूत्–प्रतीषिषति। अधीषिषति।

**अयं भावः –**

स्तौतिण्यन्तानाम् अभ्यासे विद्यमानादिणः परस्य आदेशसकारस्य मूर्धन्यादेशो भवति इति सूत्रार्थः। स्तौतिण्योरेवेति नियमः। न तु षण्येवेति। अभ्यासादिति ग्रहणेन अभ्यासाद् या प्राप्तिस्तस्या नियमो भवति। न तु धातोर्या प्राप्तिस्तस्या नियमो भवति इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

षणीति षत्वापन्नस्य सनो निर्देशः। सनः षत्वस्थले अभ्यासस्थादिणः परस्य सकारस्य आदेशप्रत्यययोरिति षत्वं स्तौतिषयते तस्य चोभयोरेव भवति न धात्वन्तरस्य। स्तोतुमिच्छति तुष्टूषति। अभ्यासोत्तरसकारस्य षत्वं ततः ष्टुत्वम्। सुष्वापयिषिति। द्युतिस्वाप्योरिति सम्प्रसारणम्। नियमः किम्? स्वद स्वर्द आस्वादने। संवरणे इति स्वामी। सिस्वदिषते। एवं सिसिक्षतीत्यादि। अत्र मा भूत्। षणीति

किम्? सुषुप्सति। अत्र षत्वाभावादभ्यासोत्तरस्य षत्वं यथा स्यात्। सनीति विशेष्यं किम्? सुषुविषे। से इत्यस्य षत्वेऽभ्यासात्परस्य षत्वं यथा स्यात्। अभ्यासादिति निमित्तविशेषणं किम्? प्रतीषिषति। धातोरिणः परत्वमाश्रित्य षत्वं यथा स्यात् उपसर्गात्तु स्थादिष्वाभ्यासेन चेति षत्वं परिषिषिक्षति।

**अयं भावः –**

षणीति कृतषत्वस्य सनो निर्देशः। सनः षत्वस्थले इत्यर्थः। नियमस्य प्रयोजनं तु सिस्वदिषते इत्यादौ षत्वाभावः। अभ्यासादिति निमित्तविशेषणं प्रतीषिषति इति धातोरिणः परत्वमाश्रित्य षत्वं यथा स्यात् उपसर्गात् तु स्थादिष्विति सूत्रेण सिध्यति परिषिषिक्षति इति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2276.प्राक्सितादड्व्यवायेऽपि। (8–3–63) –वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे त्रिषष्टितमं सूत्रं वर्तते इदम्।

वृत्तिः – सेवसित.. इत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्[2]।

व्याख्यानम् – उपसर्गात्सुनोतिसूत्रे ये सुनोत्यादयः परिनिविभ्यस्सूत्रे सितशब्दात् पूर्वं विद्यमानाः तेषामड्व्यवायेऽपि षत्वं स्यादित्यर्थः। यथा–नि असेधत् इत्यवस्थायां सिध्धातोः अडागमे कृते नि इत्युपसर्गात् अडागमव्यवधानेऽपि प्रकृतसूत्रेण षत्वे यण्सन्धौ न्यषेधदिति सिध्यति।

**बालमनोरमा –**

सुनोत्यादय इति। उपसर्गात्सुनोति–– इत्यादिसूत्रोपात्ता इति विशेषः। तेषामिति। पञ्चदशानामित्यर्थः। न्यषेधदिति। अकारेण व्यवहितत्वादिणः परत्वाभावादप्राप्तौ वचनम्। अभ्युषुणोदित्युदाहार्यम्।

**अयं भावः –**

सुनोतिधातुमारभ्य सितपर्यन्तं पञ्चदशानाम् अड्व्यवायेऽपि षत्वं भवतीत्यर्थः। न्यषेधदित्यादौ अडा व्यवहितत्वात् उपसर्गादिति अप्राप्ते प्रकृतसूत्रमारब्धम् इति भावः।

**तत्त्वबोधिनी –**

उपसर्गात्सुनोति इत्यादिना विहितं षत्वम् अड्व्यवाये एवेति भ्रमनिवारणार्थमपि शब्दस्योपादानम्। तेषामिति। पञ्चदशानामित्यर्थः। अभ्युषुणोदित्यादीन्युदाहर्तव्यानि।

**अयं भावः –**

प्रकृतसूत्रे अपिग्रहणं पूर्वविहितषत्वमड्व्यवाये एवेति ☐भ्रमो न स्यादित्यर्थं कृतमिति भावः।

**काशिकावृत्तिः –**

सेवसित.. इति वक्ष्यति। प्राक्सितसंशब्दनादित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्व्यवायेऽपि मूर्धन्यो भवतीत्येवं तद्वेदितव्यम्, अपिशब्दादनड्व्यवायेऽपि। वक्ष्यति–उपसर्गात्सुनोतिसुवति.. इति षत्वम्। अभिषुणोति। परिषुणोति। विषुणोति। निषुणोति। अभ्यषुणोत्। पर्यषुणोत्। व्यषुणोत्। न्यषुणोत्।

**अयं भावः –**

सेवसित इति वक्ष्यमाणसितपर्यन्तं पूर्वस्मात् सुनोत्यादयः अड्व्यवायेऽपि अनड्व्यवायेऽपि ये वर्तन्ते तेषां सस्य षत्वं स्यादित्यर्थः। अभ्यषुणोदिति उदाहरणमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

सेवसितेत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। अभ्यषुणोत्। न्यषेधत्। पर्यष्वङ्क्त। न्यषेवतेत्यादि।

**अयं भावः –**

सेवसितसूत्रे सितशब्दात् ये उपसर्गसूत्रमारभ्योक्ताः सुनोत्यादयस्सन्ति तेषामड्व्यवायेऽपि षत्वं भवतीति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2277.स्थादिष्वभ्यासेन चाभ्यासस्य। (8–3–64) –

वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे चतुष्षष्टितमं सूत्रमिदं वर्तते।

वृत्तिः – प्राक्सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः।[3]

व्याख्यानम् – उपसर्गात्सुनोतिसूत्रे स्थादिमारभ्य परिनिविसूत्रे सितपर्यन्तं ये धातवः सन्ति तेषु सत्सु अभ्यासेन व्यवधानेऽपि सस्य षत्वं भवति। न त्वन्येषामिति भावः। उदाहरणम् – निषिसेध इत्यवस्थायाम् अभ्यासव्यवधानेन धातोस्सकारस्य षत्वेऽप्राप्ते प्रकृतसूत्रेण षत्वं विधीयते। निषिषेध इति रूपं सिध्यति।

**काशिकावृत्तिः –**

प्राक्सितात् इति वर्तते। उपसर्गात्सुनोति इत्यत्र स्थासेनयसेध इति स्थादयः, तेषु स्थादिषु प्राक्सितसंशब्दनाद् अभ्यासेन व्यवाये मूर्धन्यो भवति। अभ्याससकारस्य च भवतीत्येवं वेदितव्यम्। अभ्यासेन व्यवाये अषोपदेशार्थं च अभिषिषेणयिषति, परिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च अभितष्ठौ।

परितष्ठौ। अषोपदेशार्थं च अभिषिषेणयिषति, परिषिषेणयिषति। षणि प्रतिषेधार्थं च अभिषिषिक्षति, परिषिषिक्षति। अभ्यासस्य इति वचनं नियमार्थम्–स्थादिष्वेवाभ्याससकारस्य मूर्धन्यो भवति, नान्यत्र। अभिससूषति। अभिसिषासति।

**अयं भावः –**

उपसर्गात्सुनोतीत्यत्र स्थादयः सितात्पूर्वं ये सन्ति तेषु अभ्यासेन व्यवधानेन मूर्धन्यो भवति। एषामेव अभ्यासस्य न तु सुनोत्यादीनाम् इति आशयः। अभ्यासस्येति वचनं नियमार्थम्। स्थादिष्वेवाभ्याससकारस्य मूर्धन्यो भवति नान्यत्रेति नियमार्थ इति भावः।

**महाभाष्यम् –**

किमर्थमिदमुच्यते। स्थादिष्वभ्यासवचनं नियमार्थम्। नियमार्थोऽयमारम्भः□–स्थादिष्वभ्यासस्य यथा स्यादिह मा भूत् – अभिसुसूषति। अथ किमर्थमभ्यासेन चेत्युच्यते। तद्व्यवाये चाषोपदेशार्थम्। तद्व्यवायेऽभ्यासव्यवाये चाऽषोपदेशस्यापि यथा स्यात्। अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थं षणिप्रतिषेधार्थं च। अवर्णान्ताभ्यासार्थं तावत् अभितष्ठौ। षणिप्रठिषेधार्थम् अभिषिषिक्षति।

**अयं भावः –**

स्थादीनामेवाभ्यासस्य षत्वं न तु सुनोतीत्यादीनामिति नियमार्थं सूत्रम्। अभ्यासव्यवायेऽषोपदेशस्यापि षत्वं यथा स्यादित्यर्थम् अभ्यासेन इत्युच्यत इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

उपसर्गादिति सूत्रे स्था इत्यारभ्य सितात्प्राग् ये धातवस्तत्राभ्यासव्यवधानेऽपि षत्वं स्यात्। अभ्यासस्य त्वेषामेव षत्वं न तु सुनोत्यादीनाम्। ननु निषिषेधेत्यादौ अभ्यासस्योपसर्गात् सुनोतीत्यादिना धातुसकारस्य त्वादेशप्रत्यययोरिति षत्वं सिद्धम्। अतः प्रथमवाक्यं किमर्थमिति चेन्न, फलत्रयार्थत्वात्। तदुक्तम् – तद्व्यवाये वा षोपदेशार्यम् अवर्णान्ताभ्यासार्थं षणि प्रतिषेधार्थं वेति। अयमार्थः – अभ्यासव्यवाये अषोपदेशस्यापि यथा स्यात्। अभिषेणयितुम् इच्छति अभिषिषेणयिषति। एवमभ्यासावर्णात्परस्यापि यथा स्यात्। अतितष्ठौ। एवं षत्वापन्ने सनि यथा स्यात्। अभिषिषिक्षति। अन्यथा स्तौतिण्योरेवेति नियमान्न स्यात्। द्वितीय वाक्यं तु नियमार्थम्। नियमश्चोक्तः। तिष्ठासति इत्यादि। नेह–अभिसुसूषति। इहाभ्याससकारस्योपसर्गादिति। द्वितीयस्य त्वादेशप्रत्यययोरिति षत्वं प्राप्तं तत्राद्यस्यैतन्नियमाद्व्यावृत्तिः। द्वितीयस्य तु स्तौतिण्योरेवेति नियमात्। षोऽन्तकर्मणि। अभिसिषासति। अत्राभ्यासषत्वस्यैतन्नियमात् व्यावृत्तावपि ततः परस्यादेशप्रत्यययोरिति षत्वं भवत्येव सनः षत्वानापत्त्या स्तौतिण्योरिति नियमानवतारात्।

**अयं भावः –**

निषिषेधेत्यादौ अभ्याससकारस्य उपसर्गात्सुनोतीत्यनेन षत्वे सिद्धे धातुसकारस्यादेशप्रत्यययोरिति च षत्वे सिद्धेऽभ्यासव्यवधानेऽपि षत्वं विधातुं किमर्थमिदं सूत्रम् इति चेदुच्यते –

1.अभ्यासव्यवायेऽषोपदेशस्यापि षत्वं यथा स्यात्। यथा–अभिषेणयितुम् इच्छति अभिषिषेणयिषति।

2.अभ्यासावर्णात्परस्यापि यथा षत्वं स्यात्। यथा–अतितष्ठौ।

3.षत्वापन्ने सनि यथा स्यात्। यथा–अभिषिषिक्षति।

इत्येवं फलत्रयार्थमिदं सूत्रमवाचि। तत्रापि प्रथमवाक्यम्। द्वितीयवाक्यं तु नियमार्थम्। अभ्यासस्य यदि षत्वं चेदेषामेव न तु सुनोत्यादीनाम् इति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2270.उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। 8–3–65) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टामध्यायस्य तृतीयपादे पञ्चषष्टितमं सूत्रं भवतीदम्।

वृत्तिः – उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्।

व्याख्यानम् – इण्णन्तोपसर्गात्परेषां सुनोतीत्यादीनां सस्य षत्वं स्यादित्यर्थः। उदाहरणम् –अभिषुणोति। अभि इत्युपसर्गः। भकारोत्तरमिकार इण् ततः सुधातोस्सकारो वर्तते। अतोऽनेन सूत्रेण षत्वे ततो णत्वे अभिषुणोति इति रूपं सिध्यति।

**बालमनोरमा –**

उपसर्गात्सुनोति। उपसर्गस्थादिति। उपसर्गशब्द उपसर्गस्थे लाक्षणिक इति भावः। निमित्तादिति। इण्रूपादित्यर्थः। इण्कोः इत्यधिकारेऽपि कोरिति नात्र सम्बध्यते। असम्भवात्। सस्येति। सहेः साडः स इत्यतः स इति षष्ठ्यन्तमनुवर्तते इति भावः। षः स्यादिति। उपदान्तस्य मूर्धन्य इत्यधिकारादिति भावः। अत्र सुनोतीत्यादिः श्तिपा निर्देशो यङ्लुङ् निवृत्त्यर्थ इति प्राञ्चः। स्पष्टार्थ इति प्रौढमनोरमायाम्। सेनयेति णिजन्तो नामधातुः। सेधतीति शपा निर्देशात् सिध्यतेर्न ग्रहणम्। अभिषुणोतीत्युदाहरणम्। प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यासः।

**अयं भावः –**

उपसर्गशब्द उपसर्गस्थमर्थं बोधयति लक्षणात्वात्। इण्कोरित्यधिकारात् इण इति निमित्तम्। कोरिति न सम्बध्यते उपसर्गेषु तदभावात्। सुनोतीत्यादिश्तिपा निर्देशेन यङ्लुकिं एतत्कार्याप्रवृत्तिः बोध्यते। यथा श्तिपा निर्देशोऽस्ति तादृशानामेव धातूनां ग्रहणं न तु सेधतीत्यनेन सिध्यतेरिति भावः।

**तत्त्वबोधिनी –**

उपसर्गात्। सुनोतिसुवति.. इत्यादिश्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्वं ने ति प्राञ्चः। स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम्। सेनयेति णिजन्तो नामधातुः। सेनयाऽभियाति अभिषेणयति। सेधेति शपा निर्देशाद् भौवादिकस्य ग्रहणं न तु सिध्यतेः, परिसिध्यति। गृहा दारा

इत्यत्रेव तात्स्थ्यात्ताच्छब्द्यमित्याह–उपसर्गस्थादिति। निमित्तादिति। इण्रूपात्। कवर्गस्तु नेह सम्बध्यते असम्भवात्। न च निःषुणोति, निःषेधति, निषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाभावात् सस्य षत्वं न स्यादिति शङ्क्यम्, षत्वविधौ 'नुम्विसर्जनीयशर्व्यवायेऽपि इत्यधिकारात्। इणन्तादुपसर्गादिति व्याख्याने तु स्यादेवात्राव्याप्तिः। दुरःषत्वणत्वयो–इत्युपसर्गत्वप्रतिषेधाद् दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवतिव्यमिति दिक्। मूर्धन्यादेशे फलितमाह –सस्य षः स्यादिति।

**अयं भावः –**

प्रकृतसूत्रे श्तिपा निर्देशात् अभिसोषवीतीत्यादौ न षत्वमिति प्राचीना वदन्ति। अभ्यासस्य यदि षत्वं स्थादिष्वेव न सुनोत्यादिषु इति नियमात् इह षत्वप्राप्तिः नास्तीति मनोरमादौ पठितम्। नुम्विसर्जनीयेति कथनात् निषुणोतीत्यादौ षत्वं सिध्यति। षत्वे कर्तव्ये दुर उपसर्गत्वप्रतिषेधात् दुःसुनोतीत्यादौ न षत्वमिति भावः।

**काशिकावृत्तिः –**

मूर्धन्यः इति वर्तते, स इति च। उपसर्गस्थान्निमित्तादुत्तरस्य सुनोति, सुवति, स्यति, स्तौति, स्तोभति, स्था, सेनय,सेध,सिच, सञ्ज, स्वञ्ज – इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुनोति–अभिषुणोति, परिषुणोति। अभ्यषुणोत्, पर्यषुणोत्। सुवति–अभिषुवति, परिषुवति। अभ्यषुवत्, पर्यषुवत्। स्यति–अभिष्यति, परिष्यति, अभ्यष्यत्, पर्यष्यत्। स्तौति–अभिष्टौति, परिष्टौति। अभ्यष्टौत्। स्तोभति–अभिष्टोभते, परिष्टोभते। अभ्यष्टोभत, पर्यष्टोभत। स्था–अभिष्ठास्यति, परिष्ठास्यति। अभ्यष्ठात्, पर्यष्ठात्। अभितष्ठौ, परितष्ठौ। सेनय–अभिषेणयति, परिषेणयाति। अभ्यषेणयत्, पर्यषेणयत्। अभिषिषेणयिषति, परिषिषेणयिषति। सेध–अभिषेधति, परिषेधति। अभ्यषेधत्, पर्यषेधत्। सिच–अभिषिञ्चति, परिषिञ्चति। अभ्यषिञ्चत्, पर्यषिञ्चत्। अभिषिषिक्षति, परिषिषिक्षति। सञ्ज–अभिषजति, परिषजति। अभ्यषजत्, पर्यषजत्। अभ्यषजत्, पर्यषजत्। स्वञ्ज–अभिष्वजते, परिष्वजते। अभ्यष्वजत, पर्यष्वजत। अभिषिष्वङ्क्षते, परिषिष्वङ्क्षते। सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः। उपसर्गादिति किम्? दधि सिञ्चति। मधु सिञ्चति। निर्गताः सेचका अस्माद् देशात् निःसेचको देश इति नायं सिचेरुपसर्गः। अभिसावकीयतीत्यत्रापि न सुनोति प्रति क्रियायोगः, किं तर्हि सावकीयं प्रति। अभिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगः, न सावयतिमिति षत्वं भवति।

**अयं भावः –**

अस्योदाहरणानि। अडागमव्यवधाने षत्वम्, षणि षत्वं च व्यधायि। निःसेचक इत्यत्र निरः सिचेरुपसर्गत्वाभावान्न षत्वम्। अभिसावकीयति इत्यत्र सुनोतिं प्रति अभेरुपसर्गत्वाभावान्न षत्वम्। अभिषावयतीत्यत्र तु सुनोतिं प्रति उपसर्गत्वसत्त्वात् अभेः, धातोः षत्वमिति भावः।

**महाभाष्यम् –**

उपसर्गात्षत्वे निस उपसंख्यानमनिणन्तत्वात्। उपसर्गात् षत्वे निस उपसंख्यानं कर्तव्यम्। निष्षुणोति। निष्षिञ्चति। किं पुनः कारणं न सिध्यति। अनिणन्तत्वात्। इणन्तादुपसर्गात्षत्वमुच्यते न

च निसिणन्तः। न वा वर्णाश्रयत्वात् षत्वस्य तद्विशेषक उपसर्गो धातुश्च। न वा वक्तव्यम्। किं कारणम्? वर्णाश्रयत्वात् षत्वस्य। वर्णाश्रयं षत्वम्। तद्विशेषक उपसर्गो धातुश्च। नैवं विज्ञायते इणन्तादुपसर्गादिति। कथं तर्हि। इण उत्तरस्य सकारस्य, स चेदिणुपसर्गस्य, स चेत्सकारस्सुनोत्यादीनामिति। तत्र शर्व्यवाये इत्येव सिद्धम्। यद्येवं धातूपसर्गयोरभिसम्बन्धोऽकृतो भवति। तत्र को दोषः? इहापि प्राप्नोति–विगताः सेचका अस्माद्ग्रामात् विसेचको ग्रामः। धातूपसर्गयोश्चाऽभिसम्बन्धः कृतः। कथम्? सुनोत्यादिभिरत्रोपसर्गं विशेषयिष्यामः, सुनोत्यादीनां य उपसर्गस्तस्य य इणिति। सुनोत्यादीनां षत्वे[4] ण्यन्तस्योपसंख्यानमधिकत्वात्। सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानं कर्तव्यम्। अभिषावयति। किं कारणम्? (न सिध्यति) अधिकत्वात्। व्यतिरिक्तः सुनोत्यादिरिति कृत्वोपसर्गात्सुनोत्यादीनामिति षत्वं न प्राप्नोति। न वाऽवयवस्याऽनन्यत्वात्। न वा वक्तव्यम्। किं कारणम्? अवयवस्यानन्यत्वात्। अवयवोऽत्रानन्यः। (इति) नामधातोस्तु प्रतिषेधः। नामधातोस्तु प्रतिषेधो वक्तव्यः। सावकमिच्छत्यभिसावकीयति। परिसावकीयति। न वाऽनुपसर्गत्वात्। न वा वक्तव्यः। किं कारणम्? अनुपसर्गत्वात्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चात्र सुनोतिं प्रति क्रियोयोगः। किं तर्हि सावकीयतिं प्रति। इहापि तर्हि न प्राप्नोति – अभिषावयति। सुनोतिं प्रति अत्र क्रियायोगः। कथम्। नासावेवं प्रेष्यते–सुन्वन्तीति। किं तर्हि? उपसर्गविशिष्टामसौ क्रियां प्रेष्यते – अभिषुण्विति।

**अयं भावः –**

निस्सुनोति इत्यवस्थायां सकारव्यवधानात् कथं षत्वमिति चेत् नुम्विसर्जनीयेति सूत्रेण शर्व्यवायेऽपि षत्वं भवति। धातूपसर्गयोरभिसम्बन्धे एव षत्वं भवति अभिषुणोतीत्यादौ। विगताः सेचका यस्मात् स विःसेचको ग्राम इत्यादौ न षत्वमुपसर्गक्रिययोः अभिसम्बन्धाभावात्। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इत्युक्तत्वात्। तेन अभिसावकीयतीत्यादौ न षत्वम्। अपि तु अभिषावयातीत्यादौ षत्वमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

उपसर्गास्थान्निमित्तादेषां सस्य षः स्यात्। सेनयभिन्नानां षोपदेशत्वाद्धात्वादेरिति सादेशे आदेशप्रत्यययोरिति प्राप्तं षत्वं सात्पदाद्योरिति निषिद्धमतः षत्वार्थमारम्भः। षुञ् अभिषवे अभिषुणोति। अभिषवः संस्कारः स्नानं च। सोममभिषुणोति। वारांस्त्रीन्षुण्वते इत्यादिदर्शनात्। एवमन्येऽप्युदाहार्याः। आद्यानां पञ्चानां श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। तेन अभिसोषवीतीत्यादौ नेत्याकरः। स्थादिष्वभ्यासेन चाभ्यासस्य षत्वं न तु सुनोत्यादिष्विति नियमादप्येतद्गतार्थमित्यन्ये। सेनयेति ण्यन्तः। सेनया अभियाति अभिषेणयति। शपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। न चानेकाच्त्वाद्यङ एव दौर्लभ्यम्, क्वौ णिलोपे क्विपि सेन् इत्येकाच्त्वेन यङ उपपत्तेः। उपसर्गाणां च पृथक्करणाभ्युपगमादित्याहुः। सेधेति शपा निर्देशो यङ्लुङ्वृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्चेति हरदत्तः। तेन प्रतिसेषधीतीत्यत्रोपसर्गात्परस्य न षत्वम् अभ्यासात्परस्य त्वादेशप्रत्यययोरिति षत्वमित्यन्यदेतत्। अपरे त्वाहुः – सिध्यतिनिवृत्त्यर्थ एव शपा निर्देशो न यङ्लुङ्निवृत्त्यर्थः। तेन प्रतिषेषधीतीति षत्वं भवत्येव। अत्र च लिङ्गम् – सेधतेर्गताविति निषेधे श्तिपा निर्देशः। तस्य यङ्लुकि षत्वनिषेधो मा भूदित्येवं परत्वात्। यदि तु सेधेति निर्देशाद्यङ्लुकि न षत्वं तदा तद् व्यर्थमेव स्यादिति। स्पष्टं चेदं माधवग्रन्थे।

उपसर्गात्षत्वे निस उपसंख्यानमनिणन्तत्वात् – निःषुणोति। निःषिञ्चति। इणन्तादुपसर्गादिति व्याख्यानं मत्वेदं वचनम्। सिद्धान्तस्तु–न चावर्णाश्रयत्वात् षत्वस्य तद्विशेषक उपसर्गो धातुश्चेति इण उत्तरस्य सस्य षत्वं स चेदिण उपसर्गस्य, सकारश्चेत्सुनोत्यादीनामित्यर्थः। निषेधतीत्यादावनेन निःषेधतीत्यादौ च नुम्विसर्जनीयशर्व्यवायेऽपीत्यनेन षत्वं सिद्धम्। नन्वेवं विगताः सेवका अस्मात् विसेवको ग्राम इत्यादावतिप्रसङ्गः, सुनोत्यादिक्रियापेक्षस्योपसर्गत्वस्योक्तरीत्या लाभानुपपत्तेः। सत्यम्, सुनोत्यादीनां य उपसर्गस्तस्य य इण् ततः परस्येति व्याख्यानात् विसेवक इत्यादौ तु गतिक्रियापेक्षयैवोपसर्गत्वात् यत्क्रियायुक्ताः प्रादय इति सिद्धान्तात् ण्यन्तस्योपसंख्यानमधिकत्वात्। णित्प्रकृतिभूतस्य सुनोत्यादेः प्रत्यभिज्ञानात् सिद्धं व्यर्थं विशेषकत्वे तु षत्वस्यानिष्यमाणत्वात्। अत एव नामधातोः प्रतिषेधोऽपि नारभ्यः। अभिसावकीयतीत्यत्र क्यजन्तविशेषकत्वादुपसर्गस्य सुनोतिं प्रति अनुपसर्गत्वात् अभिषावकशब्दादेरक्यजादौ त्विष्टत्वात्।

**अयं भावः –**

प्रकृतसूत्रे सुनोत्यादिपञ्चानां धातूनां श्तिपा निर्देशः यङ्लुङ्निवृत्त्यर्थः। तेन अभिसोषवीति भाष्यम्। हरदत्तमते सेधतिविषये शपा निर्देशस्य प्रयोजनद्वयमस्ति। यङ्लुङ्निवृत्त्यर्थः दैवादिकनिवृत्त्यर्थश्चेति। अपरे केचन सेधतीति श्तिपा निर्देशः सिध्यति निवृत्त्यर्थः न तु यङ्लुङ्निवृत्त्यर्थः। तेन प्रतिषेषिधीति इति षत्वं भवत्येवेति कथयन्ति।

निसो विषये नुम्विसर्जनीयेति व्यवधानेऽपि षत्वसिद्धिः। विसेवको ग्रामः, अभिसावकीयति इत्यादौ न षत्वम्। यत्क्रियायुक्ताः प्रादय इति सिद्धान्तादिति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2271.सदिरप्रतेः (8–3–66) –वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्यायाम् अष्टमाध्यायस्य तृतीयपादे षट्षष्टितमं सूत्रं वर्तते इदम्।

वृत्तिः – प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात्।

व्याख्यानम् – प्रतिभिन्नाद् उपसर्गस्थादिणः परस्य सदेः सस्य षत्वं भवतीत्यर्थः।

उदाहरणम् – निषीदति।

**काशिकावृत्तिः –**

सदेः सकारस्य उपसर्गस्थान्निमित्तात् प्रतेरुत्तरस्य मूर्धन्य आदेशो भवति। निषीदति, विषीदति, न्यषीदत्, व्यषीदत्। निषसाद। विषसाद। अप्रतेरिति किम्? प्रतिसीदति।

**अयं भावः –**

उपसर्गस्थान्निमित्तात् सदेः सकारस्य प्रतिभिन्नादुत्तरस्य षकारादेशो भवतीत्यर्थः। निषीदतीति उदाहरणम्। अप्रतेरिति कथनात् प्रतिसीदतीत्यत्र न षत्वमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

प्रथमाषष्ठ्यर्थे प्रतिभिन्नादुपसर्गात् सदेः सस्य षः स्यात्। निषीदति। अप्रतेः किम्? प्रतिसीदति।

**अयं भावः** – सदिरिति प्रथमा षष्ठ्यर्थे वर्तते। अतः सदेस्सकारस्येति प्रोच्यते। एवञ्च प्रतिभिन्नादुपसर्गस्थादिणः परस्य सदेस्सस्य षः स्यादिति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2272.स्तन्भेः।(8–3–67) –वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे सप्तषष्टितमं सूत्रं वर्तते।

वृत्तिः – सौत्रस्य सस्य षः स्यात्। योगविभाग उत्तरार्थः। किंच अप्रतेः इति नानुवर्तते। बाहुप्रतिष्टम्भविवृद्धमन्युः इति।

व्याख्यानम् – स्तन्भुस्तुन्भु.. इत्यादिसूत्रे विद्यमानस्य सौत्रस्य स्तन्भेः सस्य षः स्यादित्यर्थः। सदिस्तन्भ्योरप्रतेरिति वक्तव्ये सदिरप्रतेः, स्तन्भेः इति योगविभागः अवाच्चालम्बनसूत्रे स्तन्भेरनुवृत्त्यर्थः सदेरननुवृत्त्यर्थः। अप्रतेरननुवत्त्यर्थः। यतः प्रतिष्टम्भेति उदाहरणं दृश्यते। अतः अप्रतेरिति निषेधोऽत्र नानुवर्तते इत्यर्थः।

**काशिकावृत्तिः –**

उपसर्गादिति वर्तते। स्तन्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्धन्य आदेशो भवति। अभिष्टभ्नाति, परिष्टभ्नाति, अभ्यष्टभ्नात्, पर्यष्टभ्नात्। अभितष्टम्भ, परितष्टम्भ। अप्रतेः इत्येतदिह नानुवर्तते। तेनैतदपि भवति–प्रतिष्टभ्नाति, प्रत्यष्टभ्नात्, प्रतितष्टम्भ।

**अयं भावः** – उपसर्गस्थनिमित्तादग्रे विद्यमानस्य स्तन्भेस्सकारस्य षकारादेशो भवति इति सूत्रार्थः। अभिष्टभ्नाति इति उदाहरणम्। प्रकृतसूत्रे अप्रतेरित्यननुवृत्तेः षत्वे प्रतिष्टभ्नाति इति रूपं सिध्यति इति भावः।

**महाभाष्यम् –**

अप्रतेरिति वर्तते उताहो निवृत्तम्? निवृत्तमित्याह। कथं ज्ञायते? योगविभागकरणसामर्थ्यात्। इतरथा हि सदिस्तम्भ्योरप्रतेरित्येव ब्रूयात्। अस्त्यन्यद्योगविभागकरणे प्रयोजनम्। किम्? अवाच्चालम्बनाविदूर्ययोरिति वक्ष्यति तत्स्तम्भेरेव यथा स्यात्सदेर्मा भूदिति। नैतदस्ति प्रयोजनम्। एकयोगेऽपि सति यस्यालम्बनाविदूर्ये स्तस्तस्य भविष्यति। कस्य चाऽलम्बनाविदूर्ये स्तः। स्तम्भेरेव।

**अयं भावः –**

सूत्रे अप्रतेरित्यनुवृत्तमिति योगविभागाज्ज्ञायते। पुनश्च स्तम्भेरवाच्चालम्बन– सूत्रेऽनुवृत्त्यर्थं योगविभागः कृतः। अन्यथा सदेरपि अनुवृत्तेः। एकयोगेऽपि यस्यालम्बनाविदूर्येऽर्थौ स्तस्तस्य इत्युक्ते स्तन्भेरेवेति ज्ञानात् दोषो नास्तीति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

स्तम्भिः सौत्रः स्तन्भु इति सूत्रे प्रसिद्धः न तु ष्टभिस्कभिप्रतिबन्धे। षत्वविधौ नकारविशिष्टोपादानाद् इदितो नकारस्य लाक्षणिकत्वात् तेन ष्टभेर्न षत्वम्। उदः स्थास्तम्भोरित्यत्र तूभयोरप्युपादानं तत्र मकारोपधस्यानुकृतत्वात् मकारस्योभयत्रापि लाक्षणिकत्वादिति माधवः। उपसर्गस्थान्निमित्तादस्य सस्य षः स्यात्। योगविभाग उत्तरार्थः प्रतेरित्यस्य निवृत्त्यर्थश्च। अन्यथा सदिस्तम्भ्योरप्रतेरित्येव ब्रूयात्। न चावाच्चालम्बनाविदूर्ययोरित्यत्र स्तन्भेरनुवृत्तिर्मा भूदित्येव तदर्थतया योगविभागोऽन्यथासिद्ध इति वाच्यम्, एकयोगेऽपि सदेरालम्बनाविदूयार्थकत्वाभावादननुवृत्तिसिद्धेः। तस्मादप्रतेरित्यस्यानिवृत्त्यर्थ एव योगविभागः। प्रतिष्टभ्नाति। बाहुप्रतिष्टम्भविवृद्धमन्युः।

**अयं भावः –**

स्तन्भेः इति स्तन्भुस्तुन्भु इति सूत्रे विद्यमानस्सौत्र एव धातुः न तु ष्टभि□स्कभि प्रतिबन्धे इति। उदः स्थास्तम्भोरिति सूत्रे उभयोरप्यभीष्टत्वात्। सदिरप्रतेः, स्तम्भेरिति योगविभाग उत्तरार्थः प्रतेरित्यस्य निवृत्त्यर्थश्च। एकयोगे सदिस्तम्भ्योरप्रतेरित्येव वदेत्। वस्तुतः एकयोगेऽपि दोषो नास्ति। यतः आलम्बनाविदूर्यार्थौ स्तन्भेरेव स्तः न तु सदेः। अतः अप्रतेरित्यननुवृत्त्यर्थ एव योगविभाग इति वक्तव्यमिति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2273.अवाच्चालम्बनाविदूर्ययोः। (8–3–68)– वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे अष्टषष्टितमं सूत्रं वर्तते।

वृत्तिः – अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात्।

व्याख्यानम् – आलम्बने आविदूर्ये चार्थे विद्यमानस्य स्तन्भेस्सकारस्य षकारादेशो भवतीति सूत्रार्थः। उदाहरणम् – आलम्बने–अवष्टभ्य यष्टिं तिष्ठति इति। यष्टिमाश्रित्य तिष्ठतीत्यर्थः। आविदूर्यं नाम सामीप्यम्। अवष्टब्धा गौः। निरुद्धा सती समीपे आस्ते इत्यर्थः। आलम्बनं चाविदूर्यं च। तयोः आलम्बनाविदूर्ययोरिति द्वन्द्वः।

**काशिकावृत्तिः –**

अवशब्दादुपसर्गादुत्तरस्य स्तन्भेः सकारस्य मूर्धन्यादेशो भवति आलम्बनेऽर्थे आविदूर्ये च। आलम्बनम् आश्रयणम्। अविदूरस्य भाव आविदूर्यम्। आलम्बने तावत् – अवष्टभ्यास्ते। अवष्टभ्य तिष्ठति। आविदूर्ये –अवष्टब्धा सेना। अवष्टब्धा शरत्। आलम्बनाविदूर्ययोरिति किम्? अवस्तब्धो वृषलः शीतलेन। अनिगर्थ आरम्भः□।

**अयं भावः –**

अवेत्युपसर्गादनिणः परस्य आलम्बने आविदूर्ये चार्थे वर्तमानस्य स्तन्भेः सकारस्य षत्वं स्यादित्यर्थः। आलम्बनस्योदाहरणम्–अवष्टभ्य आस्ते। आविदूर्यस्योदाहरणम्–अवष्टब्धा सेना। आलम्बनाद्यभावे अवस्तब्धो वृषल शीतेन इत्यत्रापि षत्वं स्यात्। अतस्तद्दलमुक्तम्। अवेत्यनिणन्तादपि उपसर्गात् सस्य षत्वार्थमिदम् आरब्धम् इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

अवात्परस्य स्तन्भेरेतयोरर्थयोः षत्वं स्यात्। य एवमवष्टभ्नाति अश्रयतीत्यर्थः। अविदूरस्य भाव आविदूर्यम्। निपातनाद्भावप्रत्ययः। अन्यथा न नञ्पूर्वादिति निषेधात्। अवष्टब्धं सन्निहितमित्यर्थः। अद्यश्वीनावष्टब्ध इति सूत्रेऽप्येवमेव व्याख्यातम्।

**अयं भावः –**

आविदूर्यमिति भावप्रत्ययो निपातनाद्वक्तव्यः। अन्यथा न नञ्पूर्वादिति निषेधो वर्तते। अवष्टब्धं सन्निहितमित्यर्थः।

**वैयाकरणसिद्धान्तकौमुदी –**

2274.वेश्च स्वनो भोजने। (8–3–69) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे एकोनसप्ततितमं सूत्रं वर्तते।

वृत्तिः – व्यवाभ्यां स्वनतेः सस्य षः स्याद्भभोजने।

व्याख्यानम् – व्यवाभ्यामुपसर्गाभ्यां परस्य स्वनतेः सस्य षः स्यात् भोजनेऽर्थे गम्यमाने इति सूत्रार्थः। उदाहरणम्–विष्वणति। सशब्दं भुङ्क्त इत्यर्थः। अट्कुप्वाङिति णत्वम्।

**काशिकावृत्तिः –**

वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति। विष्वणति, व्यष्वणात्, विषष्वाण। अवष्वणति, अवाष्वणत्, अवषष्वाण। अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति। भोजन इति किम्? विस्वनति मृदङ्गः।

**अयं भावः –**

भोजनेऽर्थे विद्यमानस्य स्वनतेः सकारस्य वि अव इत्युपसर्गाभ्यां परस्य षत्वं स्यादिति सूत्रार्थः। विष्वणति–शब्दं कुर्वन् भुङ्क्ते इत्यर्थः। व्यष्वणत् इति प्राक्सितादड्व्यवायेऽपि इति षत्वम्। विषष्वाणेत्यत्र स्थादिष्वभ्यासेन चाभ्यासस्येति षत्वमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

चकाराद् अवेत्यस्यानुकर्षः। व्यवाभ्यां स्वनतेः सस्य षत्वं स्याद् भोजने। विष्वणति, अवष्वणति वा मांसम्। सशब्दं भुङ्क्त इत्यर्थः। भोजने किम्? विस्वनति वीणाम्। शब्दायते इत्यर्थः।

अयं भावः – वेश्चेति सूत्रे चकारेण पूर्वसूत्रात् अवेत्यनुकृष्यते। विष्वणति मांसमित्यस्य शब्दं कुर्वन् मासं भुङ्क्ते इत्यर्थः। भोजने इत्यभावे विस्वनति वीणामित्यत्र षत्वं स्यात्। अतो भोजने इति व्यधायीति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2275.परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। (8–3–70) –

वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकाणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे सप्ततितमं सूत्रं वर्तते।

वृत्तिः – परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति।

व्याख्यानम् – परिनिविभ्यः परेषां सेवसितादीनां धातूनां सकारस्य षकारादेशो भवति इत्यर्थः। सेवेत्यत्र अकार उच्चारणार्थः। सितेति षिञ् बन्धने इति क्तान्तस्य ग्रहणम्। परिषेवते इति उदाहरणम्। परि इत्युपसर्गात् सेव्धातोः प्रकृतसूत्रेण षकारः। परिषेवते इति सिध्यति।

**काशिकावृत्तिः –**

परि नि वि–इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव, सित, सय, सिवु, सह, सुट्, स्तु, स्वञ्ज–इत्येतेषां सकारस्य मूर्धन्य आदेशो भवति। परिषेवते, निषेवते, विषेवते, पर्यषेवत, न्यषेवत, व्यषेवत। परिषिषेविषते, निषिषेविषते। विषिषेविषते। सित–परिषितः, विषितः, निषितः। सय–परिषयः, निषयः, विषयः। सिव्–परिषीव्यति, निषीव्यति, विषीव्यति। पर्यषीव्यत्, न्यसीव्यत्, व्यषीव्यत्। पर्यसीव्यत्, न्यसीव्यत्, व्यसीव्यत्। सह–परिषहते, निषहते, विषहते। पर्यषहत, न्यषहत, व्यषहत। पर्यसहत, न्यसहत, व्यसहत। सुट्–परिष्करोति। पर्यष्करोत्, पर्यस्करोत्, स्तु–परिष्टौति, निष्टौति, विष्टौति। पर्यष्टौत्, न्यष्टौत्, व्यष्टौत्। पर्यस्तौत्, न्यस्तौत्, व्यस्तौत्। ष्वञ्ज–दन्शसन्जस्वन्जाम् इति नलोपः। परिष्वजते, विष्वजते, निष्वजते। पर्यष्वजत, पर्यस्वजत। पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात्।

**अयं भावः –**

पर्याद्युपसर्गेभ्यः परेषां सिवादीनां सकारस्य षकारादेशो भवतीति सूत्रार्थः। परिषेवते इत्यादीनि उदाहरणानि। परिषिषेविषते इत्यत्र क्रमेण परिनिविभ्यस्सूत्रेण स्वादिष्विति सूत्रेण आदेशप्रययेति सूत्रेण च षकारः। पर्यष्करोत्, पर्यस्करोत् इत्यत्र सिवादीनां वाऽड्व्यवायेऽपि इति वक्ष्यमाणसूत्रेण विकल्पेन षकारः। स्तुस्वञ्ज्योः परिष्टौति, पर्यष्टौदित्यत्र उपसुर्गादिति प्राक्सितादड्व्यवायेऽपि च सूत्रेण षत्वे

सिद्धे अत्र सूत्रे ग्रहणं कुत इति चेत् सिवादीनामिति वक्ष्यमाणेन सूत्रेण विभाषा षत्वार्थं कृतमस्तीति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

एभ्यः परेषामेषां सस्य षः स्यात्। षेवृ सेवने परिषेवते इत्यादि। षिञ् बन्धने। अस्य

क्तप्रत्ययान्तस्य एरजन्तस्य च सितसयशब्दाभ्यामुपादानम्। विषितः। विषयः। प्रत्ययविशेषणान्तयोर्ग्रहणान्नेह–विसिनोति। एवं च विषिण्वन्ति विषया इति विग्रहवाक्ये षत्वं चिन्त्यम्, षिवु तन्तुसन्ताने, षह मर्षणे। सुट् कृञागमः परिष्करोति। परिनिविभ्यः किम्? अभिसेवते इत्यादौ मा भूत्। स्तुस्वञ्जोस्तूपसर्गात्सुनोति इति षत्वम् उपसर्गान्तरयोगेऽपि भवत्येव।

न चात्र तयोरुपादानवैयर्थ्यम्, पर्यादिपूर्वयोः सिजादीनामड्व्यवाये वक्ष्यमाण– विकल्पप्रवृत्त्यर्थत्वात्। अत्रेदमवधेयम् – षहषुहेति तृप्त्यर्थे दिवादिः। तस्याप्यत्र सहपदेनोपादानम् अकारस्योच्चारणार्थत्वात्। परिषक्ष्यति। न च दिवादौ षहेत्यस्य पाठो हरदत्तादीनामनभिमत इति माधवोक्त्या तस्य दिवादिपाठो निर्मूल इति वाच्यम्, शकिसहोश्चेति सूत्रे निरनुबन्धकग्रहणपरिभाषायाः प्रत्ययमात्रविषयकत्वाद् द्वयोरपि सहोर्ग्रहणमिति हरदत्तोक्तेर्माधवोक्तेरेव प्रामादिकत्वात्। तीषसहेति इड् विकल्पविधौ तु शब्दन्तनिर्देशाद् भौवादिकस्यैव ग्रहणं न तु सहपतेजात्यादयः। तत्र वदन्ति–उभयत्राप्यकारस्योच्चारणार्थत्वं शपा निर्देशो वास्तु वैषम्ये बीजाभावादाकरग्रन्थानां चात्रोदासीनत्वादिति। न च तत्र सहसाहचर्यादिपदमिच्छतिपरमिति व्याख्यानाच्छपा निर्देश आवश्यक इति वाच्यम् इति उदित्पाठपक्षे तस्यानावश्यकत्वात्।

**अयं भावः** – सूत्रे सितसयशब्दग्रहणेन प्रत्ययविशेषणान्तत्वेन विषितः, विषयः इत्यत्रैव षत्वं न तु विसिनोतीत्यादौ। परिनिविभ्य इति कथनात् अभिसेवते इत्यादौ न षत्वम्। स्तुस्वञ्जोस्तु उपसर्गादिति सूत्रेण उपसर्गान्तरयोगेऽपि षत्वं भवति। पुनरत्र पाठः सिवादीनामिति वक्ष्यमाणविकल्पसिध्यर्थम्। दिवादौ षहेत्स्यस्य पाठो हरदत्तादिभिरनभिमतः प्रामादिकः। निरनुबन्धकपरिभाषया द्वयोरपि ग्रहणात् इति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2359.सिवादीनां वाड्व्यवायेऽपि। (8–3–71) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे एकसप्ततितमं सूत्रमिदम्।

वृत्तिः – परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। पर्यषहत, पर्यसहत।

व्याख्यानम् – परिनिविभ्यः अड्व्यवधानेऽपि सिवादीनां धातूनां सकारस्य

षकारादेशोवाभवतीत्यर्थः। सिवुसहसुट्स्तुस्वञ्जः, सिवादयः। उदाहरणम् – पर्यषहत, पर्यसहत। अत्र परीत्युपसर्गादनन्तरं सहेः पूर्वमडागमस्य व्यवधानमस्ति। अतोऽनेन सूत्रेण विकल्पेन षकारे रूपद्वयमेतत्सिध्यति।

**काशिकावृत्तिः –**

अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जाम् इति सिवादयः। सिवादीनमड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सकारस्य वा मूर्धन्यो भवति। तथा चैवोदाहृतम्।

**अयं भावः** – परिनिविभ्य इति सूत्रानन्तरं सिवादीनमिति सूत्रं वर्तते। अनेन विकल्पेन अड्व्यवायेऽपि षत्वं विधीयते। अपिनाऽव्यवधानेऽपि षत्वं सिध्यति।

**व्याकरणसिद्धान्तसुधानिधिः –**

परिनिविभ्यः परेषां सिवादीनां पञ्चानामटा व्यवधानेऽपि सस्य षो वा स्यात्। पर्यषीव्यत्, पर्यसीव्यत्, पर्यषहत, पर्यसहत। पर्यष्करोत, पर्यस्करोत्। पर्यष्टौत्, पर्यस्तौत्। पर्यष्वक्त, पर्यस्वक्त, एवमन्यत्।

**अयं भावः** – सिवादीनां पञ्चानां परिनिविभ्यः परेषाम् अड्व्यवधानेऽपि सस्य षकारादेशो विकल्पेन भवतीति सूत्रार्थः। पर्यषहतेत्यादीनि उदाहरणानीति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2349.अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। (8–3–72) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे द्विसप्ततितमं सूत्रं भवतीदम्।वृत्तिः – एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। अनुष्यन्दते, अनुस्यन्दते वा जनम्। अप्राणिषु किम्? – अनुस्यन्दते हस्ती। अप्राणिषु इति पर्युदासात् मत्स्योदके अनुस्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु न इत्युक्तौ तु न स्यात्।

व्याख्यानम् –अनु, वि, परि, अभि, नि–एभ्यः परस्य प्राणिभिन्नकर्तृकस्य स्यन्दतेः सकारस्य षत्वं विकल्पेन भवति इति सूत्रार्थः। जलम् अनुष्यन्दते, अनुस्यन्दते वा इति उदाहरणम्। प्राण्यप्राणिकर्तृकस्यापि प्राणिकर्तृकत्वापायात् षत्वविकल्पो भवति। यथा – मत्स्योदके अनुस्यन्देते इत्यत्रोदकस्याप्राणिकर्तृकत्वेऽपि मत्स्यस्य प्राणिकर्तृकत्वात् वा स्यन्दते षत्वमित्यर्थः। अतोऽत्र अप्राणीति पर्युदासो विज्ञेयः न तु प्रसज्यप्रतिषेधः। अप्राणिष्वित्यभावे हस्ती अनुस्यन्दते इत्यत्रापि षत्वं स्यादिति भावः।

**काशिकावृत्तिः –**

अनु, वि, परि, अभि, नि – इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते, विष्यन्दते, परिष्यन्दते, अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिस्यन्दते। अभिस्यन्दते। निस्यन्दते। अप्राणिष्विति किम्? अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणिविषयस्यापि स्यन्दतेरयं विकल्पो भवति – अनुष्यन्देते मत्स्योदके, अनुस्यन्देते। अप्राणिषु इति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः।

**अयं भावः** –

अन्वादिभ्यः परस्य प्राणिभिन्नकर्तृकस्य स्यन्दतेस्सकारस्य वा षकारो भवति। अप्राणिष्विति कथनेन उदके मत्स्य अनुस्यन्दते इत्यत्र न षत्वम्। पर्युदासस्वीकारात् मत्स्योदके अनुष्यन्देते इत्यत्र षत्वविकल्पः स्यादेवेति भावः।

**महाभाष्यम्** –

अथ यः प्राण्यप्राणी च कथं तत्र भवितव्यम्, अनुष्यन्देते मत्स्योदके इति आहोस्विदनुस्यन्देते मत्स्योदके इति। यदि तावदप्राणी विधिनाश्रीयते अस्त्यत्र प्राणीति कृत्वा भवितव्यं षत्वेन, अथ प्राणी प्रतिषेधेनाश्रीयते अस्त्यत्र प्राणीति कृत्वा भवितव्यं प्रतिषेधेन। किं पुनरत्राऽर्थसतत्त्वम्। देवा एतज्ज्ञातुमर्हन्ति।

**अयं भावः** – यः प्राणी अप्राणी च वर्तते स केवलं प्राणिभिन्नत्वात् विकल्पेन षत्वमर्हतीति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। स्यन्दू प्रस्रवणे। अनुष्यन्दते जलम् अनुस्यन्दते वा। एवमन्यत् एभ्यः किम्? अतिस्यन्दते। अप्राणिषु किम्? अनुस्यन्दते हस्ती। अप्राणिष्विति प्रसज्य प्रतिषेधपक्षे प्राणितद्भिन्नोभयकर्तृकेऽपि न षत्वम्। पर्युदासे तु प्राणिभिन्नस्य तत्रापि कर्तृत्वानपायात् प्राप्नोत्येवेत्याशङ्क्य भाष्यकृतोक्तम् – देवा ज्ञातुमर्हन्तीति। तथा च प्रतिषेधो वाक्यभेदोऽसमर्थसमासश्चेति गौरवात्पर्युदास एव युक्त इति भावः। अनुष्यन्देते मत्स्योदके।

**अयं भावः** – अन्वादिग्रहणेन अतिस्यन्दते इत्यत्र न षत्वम्। अप्राणिष्विति कथनेन हस्ती अनुस्यन्दते इत्यत्र न षत्वम्। लाघवात् पर्युदास एव युक्त इति भावः। तेन मत्स्योदके

अनुष्यन्देते इत्यत्रापि षत्वं सिध्यति विकल्पेन।

**वैयाकरणसिद्धान्तकौमुदी** –

2398. वेः स्कन्देरनिष्ठायाम्। (8–3–73) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे वर्तत इदं सूत्रं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे त्रिसप्ततितमं सूत्रं भवति।

वृत्तिः – षत्वं वा स्यात्। कृत्येवेदम्, अनिष्ठायाम् इति पर्युदासात्। विष्कन्ता, विस्कन्ता। निष्ठायां तु विस्कन्नः।

व्याख्यानम् – वेः परस्य स्कन्देः सस्य षो वा स्याद् अनिष्ठायां परत इति सूत्रार्थः। इदं सूत्रं कृति एव प्रवर्तते अनिष्ठायामिति पर्युदासात्।

उदाहरणम् – विष्कन्ता, विस्कन्ता इति विकल्पेन षत्वम्। निष्ठायां तु न षत्वम्। विस्कन्न इति स्यादित्यर्थः।

**काशिकावृत्तिः** –

वेरुपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम्। विष्कन्ता, विस्कन्ता, विष्कन्तुम्, विस्कन्तुम्। विष्कन्तव्यम्, विस्कन्तव्यम्। अनिष्ठायाम् किम्? विस्कन्नः।

**अयं भावः** – व्युपसर्गादग्रे विद्यमानस्य स्कन्देः सकारस्य षकारो वा भवति निष्ठाभिन्ने परे इत्यर्थः। विष्कन्ता इत्याद्युदाहरणानि। अनिष्ठायामिति कथनात् विस्कन्न इति न षत्वमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

वेः परस्य स्कन्दतेः सस्य षो वा स्यात् अनिष्ठायाम्। निष्ठापर्युदासात् तत्सदृशस्य

कृत्प्रत्ययस्यैवोपादानमिति माधवादयः। एवञ्च विष्कन्दतीति तिङन्तोदाहरणं चिन्त्यम्। स्कन्दिर् गतिशोषणयोः। अषोपदेशत्वादप्राप्ते विभाषेयम्। विष्कन्ता, विस्कन्ता। निष्ठायां तु विस्कन्नः, विस्कन्नवान्।

अयं भावः – सूत्रेऽनिष्ठायामिति पर्युदासात् तद्भिन्नतत्सदृशपदेन कृत्प्रत्ययस्यैकग्रहणं कर्तव्यमिति माधवादयः कथयन्ति। तथा च विष्कन्दतीति तिङन्तोदाहरणं तु चिन्त्यम्। स्कन्द्धातुरषोपदेशः। अतोऽप्राप्ते विकल्पेन षत्वार्थमिदं सूत्रमिति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

2399.परेश्च। (8–3–74) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं विराजते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे चतुस्सप्ततितमं सूत्रमिदम्।

वृत्तिः – अस्मात्परस्य स्कन्देः सस्य षो वा। योगविभागाद् अनिष्ठायाम् इति न सम्बध्यते। परिष्कन्दति, परिस्कन्दति। परिस्कन्नः, परिष्कण्णः। षत्वपक्षे णत्वम्। न च पदद्वयाश्रयतया बहिरङ्गत्वात् षत्वस्यासिद्धत्वम्, धातूपसर्गयोः। कार्यमन्तरङ्गम् इत्यभ्युगमात्। पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेन इति भाष्यम्। पूर्वं धातुः साधनेन इति मतान्तरे तु न षत्वम्।

व्याख्यानम् – परेः परस्य स्कन्देः सस्य षो वा भवतीति सूत्रार्थः।

उदाहरणम् – परिष्कन्दति, परिस्कन्दति, एकयोगेन सिद्धे योगविभाग अनिष्ठायामित्यस्यासम्बन्धार्थः। तेन परिष्कण्णः, परिस्कन्न इति सिध्यति। षत्वपक्षे णत्वं भवति निमित्तसत्वात्। षत्वं बहिरङ्गं णत्वमन्तरङ्गम्। तथापि धातूपसर्गयोः कार्यमन्तरङ्गमिति कथनात् षत्वमन्तरङ्गमेव भवति। पूर्वं धातुरुपसर्गेण युज्यत इति भाष्यमस्ति। पूर्वं धातुः साधनेन इति पक्षे तु षत्वस्यासिद्धत्वात् न षत्वमिति आशयः।

**काशिकावृत्तिः** –

परिशब्दाच्चोत्तरस्य स्कन्देः सकारस्य वा मूर्धन्यो भवति। परिष्कन्ता परिष्कन्तुम्, परिष्कन्तव्यम्, परिस्कन्ता, परिस्कन्तुम्, परिस्कन्तव्यम्। पृथग्योगकरणसामर्थ्यात् अनिष्ठायाम् इत्येतन्नानुवर्तते – परिष्कण्णः, परिस्कन्नः□।

**अयं भावः** – पर्युपसर्गात् स्कन्देस्सकारस्य षकारादेशो विकल्पेन भवतीति सूत्रार्थः। परिष्कन्तेत्याद्युदाहरणानि। परेश्चेति पृथग्योगविभागस्तु अनिष्ठायामिति अनुनुवृत्त्यर्थः। तेन निष्ठायां षत्वं वा सिध्यति परिष्कण्णः, परिस्कन्न□इति।

**महाभाष्यम्** –

अथानिष्ठायामिति वर्तते उताहो निवृत्तम्? निवृत्तमित्याह। कथं ज्ञायते? योगविभागकरणसामर्थ्यात्। इतरथा हि विपरिभ्यां च स्कन्देरनिष्ठायाम् इत्येव ब्रूयात्।

**अयं भावः** – प्रकृतसूत्रेऽनिष्ठायामिति नानुवर्तते पृथग्योगकरणात्। अन्यथा पाणिनिः विपरिभ्यां च स्कन्देरनिष्ठायामित्येव कथयेत्। अतोऽनिष्ठायामिति नानुवर्तते। निष्ठायामपि परेरग्रे स्कन्देस्सकारस्य षत्वं वा भवतीति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

अस्मात्परस्य स्कन्दतेः सस्य षो वा स्यात्। अनिष्ठायामित्यस्येह नानुवृत्तिः योगविभागसामर्थ्यात्। तेन तिङन्ते निष्ठान्ते चापि भवति, परिष्कन्दति, परिस्कन्दति। परिष्कन्नः□, परिस्कण्णः परिष्कन्ता, परिस्कन्ता। न च षत्वस्य पदद्वयाश्रयतया बहिरङ्गस्यासिद्धत्वात् कथं तत्र षत्वमिति वाच्यम्। धातूपसर्गयोः कार्यमन्तरङ्गमिति सिद्धान्तात्। धूर्वं धातुः साधनेनेति पक्षे तु न भवति णत्वमित्याहुः।

**अयं भावः** –

परेश्चेति सूत्रविभागसामर्थ्यात् अनिष्ठायामिति नानुवर्तते। धातूपसर्गयोः कार्यस्यान्तरङ्गत्वात् णत्वे कर्तव्ये षत्वं नासिद्धं भवति। तदा परिष्कण्ण इति रूपं भवति। पूर्वं धातुः साधनेनेति पक्षे णत्वं न भवति इति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

3026.परिस्कन्दः प्राच्यभरतेषु। (8–3–75) – वैयाकरणसिद्धान्तकौमुद्यां पूर्वकृदन्तप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे पञ्चसप्ततितमं सूत्रमस्तीदम्।

वृत्तिः – पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। प्राच्य इति किम्? – परिष्कन्दः, परिस्कन्दः। परेश्च इति षत्वविकल्पः।

व्याख्यानम् – प्राच्यभरतानां प्रयोगविषये परिस्कन्द इति निपात्यते षत्वाभावः। अन्येषां मते परेश्चेति सूत्रेण विकल्पेन षत्वं परिष्कन्दः, परिस्कन्द इति रूपमिति। परेश्चेति सूत्रेण विकल्पे षत्वे सिद्धे तदभावोऽनेन निपात्यते इत्यर्थः।

**काशिकावृत्तिः –**

परिस्कन्द इति मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। अन्यत्र परिष्कन्दः। अचि निपातनम्। अथवा निष्ठातकारस्य लोपः। भरतग्रहणं प्राच्यविशेषणम्।

**अयं भावः –**

प्राच्यभरतानां प्रयोगविषये परिस्कन्द इति षत्वाभावो निपात्यते। एतेषां मते परिस्कन्दः। अन्येषां मते उभयथा इति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

2537.स्फुरतिस्फुलत्योर्निर्निविभ्यः। (8–3–76) – वैयाकरणसिद्धान्तकौमुद्यां तुदादिप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे षट्सप्ततितमं सूत्रं भवतीदं विकल्पेन षत्वविधायकम्।

वृत्तिः – षत्वं वा स्यात्। निष्फुरति, निस्फुरति। स्फर इत्यकारोपधं केचित्पठन्ति। पस्फार।

व्याख्यानम् – निस्, नि, वि – एतेभ्य उपसर्गेभ्यः परयो स्फुरतिस्फुलत्योः सकारस्य षत्वं वा स्यात् इति सूत्रार्थः। निष्फुरतीति उदाहरणम्। वा शरीति विकल्पेन विसर्ग इति आशयः। केचन स्फुर इत्यस्य स्फर इति अकारोपधत्वमपि पठन्ति।

**काशिकावृत्तिः –**

स्फुरतिस्फुलत्योः सकारस्य निस्, नि, वि इत्येतेभ्य उत्तरस्य वा मूर्धन्यादेशो भवति। स्फुरति – निष्ष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुरति, विष्फुरति। स्फुलति – निष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति।

**अयं भावः –**

निरादिभ्यः परयोः स्फुरतिस्फुलत्योः सकारस्य षत्वं वा स्यात् इति सूत्रार्थः। निस्–निष्ष्फुरति इति, निस्स्फुरति इति। नि–निष्फुरति, निस्फुरति इति एवं विकल्पेनोदाहरणानि भवन्ति।

**व्याकरणसिद्धान्तसुधानिधिः –**

स्फुर स्फुरणे, स्फुल सञ्चलने तुदादी। एभ्यः परयोरनयोः सस्य वा षत्वं स्यात्। निस्फुरति, निष्फुरति। निस्फुलति, निष्फुलति। विस्फुरति, विष्फुलतीत्यादि। अनयोः किम्? निस्फूर्जति।

अयं भावः – सूत्रस्थौ उभावपि धातू तुदादिगणीयौ। अनयोरभावे निस्स्फूर्जतीत्यत्रापि षत्वं स्यात्। अतोऽनयोरुल्लेखः।

**वैयाकरणसिद्धान्तकौमुदी –**

2556.वेः स्कभ्नातेर्नित्यम्। (8–3–77) – वैयाकरणसिद्धान्तकौमुद्यां क्र्यादिप्रकरणे वर्तते इदं सूत्रम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे सप्तसप्ततितमं सूत्रमिदं षत्वविधायकम्।

वृत्तिः – वेः परस्य स्कभ्नातेः सस्य षः स्यात्। विष्कभ्नोति, विष्कभ्नाति।

व्याख्यानम् – अत्र स्कन्भ् धातुः विवक्षितः न तु श्नाविकरणविशिष्टः केवलं स्कभ्नातिः। स्कभ्नोतिरपीष्टः। तेन पूर्वोक्तं रूपद्वयं सिध्यति। विष्कभ्नोति इति श्नुविकरणविशिष्टः प्रयोगः। विष्कभ्नाति इति श्नाविकरणविशिष्टः प्रयोगः। उभयत्रापि अनेन सूत्रेण षत्वमुच्यते। नित्यग्रहणाद् विकल्पस्य निवृत्तिः ज्ञायते।

**काशिकावृत्तिः –**

वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति। विष्कभ्नाति। विष्कम्भिता। विष्कम्भितुम्। विष्कम्भितव्यम्।

**व्याकरणसिद्धान्तसुधानिधिः –**

वेः परस्य स्कभ्नातेः सस्य नित्यं षत्वं स्यात्। विष्कभ्नाति, विष्कभ्नोति प्राञ्चरस्तु स्कभ्नातेरित्युक्तः। स्कभ्नोतेरित्याहुः। अन्ये तु श्नाप्रत्ययविशिष्टत्वविवक्षायां विष्कम्भितमित्यादौ षत्वं न स्यात्। धातुमात्रविवक्षायां तु श्नुप्रत्ययान्तेऽपि तद्दुर्वारम् उपलक्ष्य धातोर्भेदाभावात् स्कम्भेरेव विकरणद्वयविधानात्। माधवादिभिरपि षत्वस्य स्कभ्नोतौ स्वीकारादित्याहुः।

अयं भावः – वेः परस्य सौत्रस्य स्कन्भ्धातोः सस्य नित्यं षत्वं स्यादिति सूत्रार्थः। माधवादिभिरपि विकरणद्वयस्यापि स्वीकारात् प्रकृतसूत्रे स्कभ्नाति– स्कभ्नोत्योः ग्रहणमिति भावः।

**वैयाकरणसिद्धान्तकौमुदी –**

1019.समासाङ्गुलेः सङ्गः। (8–3–80) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे अशीतितमं सूत्रमिदं वर्तते।

वृत्तिः – अङ्गुलिशब्दात्सस्य मूर्धन्यः स्यात्समासे। अङ्गुलिषङ्गः। समासे किम्? – अङ्गुलेः सङ्गः।

व्याख्यानम् – समासे अङ्गुलिशब्दात् अग्रे विद्यमानस्य सङ्गशब्दावयवस्य सकारस्य षकारादेशो भवति इति सूत्रार्थः। उदाहरणम् – अङ्गुलिषङ्गः। सामसाभावे अङ्गुलेः सङ्ग इत्येव भवति।

**काशिकावृत्तिः –**

सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्धन्य आदेशो भवति समासे। अङ्गुलेः सङ्गः– अङ्गुलिषङ्गः। अङ्गुलिषङ्गा यवागूः। अङ्गुलिषङ्गो गाः सादयति। समास इति किम्? अङ्गुलेः सङ्गं पश्य।

अयं भावः – कस्मिन्नपि समासे अङ्गुलेरुत्तरस्य सङ्गावयवसकारस्य षकारादेशो भवतीति सूत्रतात्पर्यम्। अङ्गुलिषङ्गादिकमुदाहरणम्। समासपदाभावे असमस्तेऽपि षत्वं स्यात्। तद्वारणाय समास इत्यवाचीति भावः।

**व्याकरणसिद्धान्तसुधानिधिः –**

अङ्गुलेः परस्य सङ्गशब्दस्य यः सकारः तस्य षः स्यात्। आदेः परस्येत्युक्तार्थलाभः□। सङ्ग इति प्रथमाषष्ठ्यर्थे अङ्गुलिषङ्गः। समासे किम्? अङ्गुलेः सङ्गः। अङ्गुलेः किम्? पाणिसङ्गः। सङ्गस्य किम्? अङ्गुलिसन्धिः। म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रज इत्यत्र सकारपाठश्चिन्त्य इति वामनः।

अयं भावः – सूत्रे सङ्ग इति प्रथमा षष्ठयर्थे वर्तते। आदेः परस्येति परिभाषया सङ्ग इत्यत्र सकारस्य षत्वं भवति। समासे किमित्यादीनि दलप्रयोजनानि उक्तानि। म्लयान्तीति श्लोके सकारयुक्तः पाठः चिन्त्य इति वामनः कथयति।

**वैयाकरणसिद्धान्तकौमुदी –**

1020.भीरोः स्थानम्। (8–3–81) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे एकाशीतितमं सूत्रमस्तीदम्।

वृत्तिः – भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे। भीरुष्ठानम्। असमासे तु भीरोः स्थानम्।

व्याख्यानम् – समासे भीरुशब्दात् अग्रे विद्यमानस्य स्थान– शब्दावयवसकारस्य षकारादेशो भवति इति सूत्रार्थः। समासाभावे तु भीरोः स्थानमिति।

**काशिकावृत्तिः –**

स्थानसकारस्य भीरोरुत्तरस्य मूर्धन्यादेशो भवति। भीरुष्ठानम्। समास इत्येव –भीरोः स्थानं पश्य।

**व्याकरणसिद्धान्तसुधानिधिः –**

भीरोः परस्य स्थानस्य षः स्यात् समासे। भीरुष्ठानम्।

**वैयाकरणसिद्धान्तकौमुदी** –

924.अग्नेः स्तुत्स्तोमसोमाः। (8–3–82) – वैयाकरणसिद्धान्तकौमुद्यां द्वन्द्वसमासप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे द्व्यशीतितमं सूत्रमिदम्।

वृत्तिः – अग्नेः परेषामेषां सस्य षः स्यात्समासे। अग्निष्टुत्। अग्निष्टोमः अग्नीषोमौ। अग्नीवरुणौ।

व्याख्यानम् – समासे अग्निशब्दात्परेषां स्तुत्सतोमसोमानां सकारस्य षकारादेशो भवति इत्यर्थः। अग्निः स्तूयतेऽस्मिन् स क्रतुविशेषः अग्निष्टुत्। अत्रोपपदसमासो वर्तते। सम्पदादित्वादधिकरणे क्विप्। अत्र स्तुत्शब्दो वर्तते अग्रे। अतोऽनेन सूत्रेण षः। अग्नीनां स्तोमः अग्निष्टोमः। सोमयागस्य संस्थास्वाद्या संस्था उच्यते। अत्राग्नेः पुरतस्स्तोमशब्दो वर्तते षष्ठीसमासे। अतोऽनेन षत्वम्। अग्निश्च सोमश्च अग्नीषोमौ, अग्निश्च वरुणश्चाग्नीवरुणौ इत्यत्र द्वन्द्वसमासो वर्तते। अनेन षत्वम्। ईदग्नेः सोमवरुणयोः इति ईत्वम्। एवञ्च अग्नेः परेषामेषां सस्य षः स्यात्कस्मिन्नपि समासे इति आशयः।

**काशिकावृत्तिः** –

अग्नेरुत्तरस्य स्तुत, स्तोम, सोम – इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नेर्दीर्धात्सोमस्येष्यते। तेनेह न भवति। अग्निसोमौ माणवकौ। तथा च ज्योतिः – अग्निः, सोमः लता विशेषः – अग्निसोमौ तिष्ठतः। समास इत्येव अग्नेः सोमः।

**अयं भावः** – अग्निसोमौ माणवकौ इत्यत्र न ईत्वषत्वे। समासाभावेऽपि नेत्वषत्वे इति भावः।

**महाभाष्यम्** –

अग्नेर्दीर्घात्सोमस्य। अग्नेर्दीर्घात्सोमस्येति वक्तव्यम्। अग्नीषोमौ। इतरथा ह्यनिष्टप्रसङ्गः। इतरथा ह्यनिष्टं प्रसज्येत। अग्निसोमौ माणवकाविति। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। गौणमुख्ययोर्मुख्ये सम्प्रतिपत्तिः। तद्यथा गौरनुबन्ध्योऽजोऽग्नीषोमीय इति न वाहीकोऽनुबध्यते। कथं तर्हि वाहीके वृद्ध्यात्वे भवतो–गौस्तिष्ठति गामानयेति। अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्ध्यात्वे।

**अयं भावः** – अग्निसोमौ माणवकौ इत्यत्र षत्वं न भवति गौणमुख्यपरिभाषया। अर्थाश्रये एतत्कार्यं प्रवर्तते। न तु शब्दाश्रये। गौस्तिष्ठति इति शब्दाश्रयकार्यमस्ति। यतः गौ इति निष्पादनात्पूर्वं वाहीकार्थे नैव युज्यते। अत आदौ शब्दाकार्यं वृद्ध्यादिकं भवति। ततः शब्दान्तरसम्बन्धेन वाहीकार्थप्रतीतिरिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

अग्नेः परेषामेषां षः स्यात्। अग्निष्टोमः। अग्नीषोमौ। अग्नीसौमौ माणवकावित्यत्र न गौणमुख्यन्यायात्।

**वैयाकरणसिद्धान्तकौमुदी –**

1021.ज्योतिरायुषः स्तोमः। (8–3–83) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे इदं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे त्र्यशीतितमं सूत्रं वर्तते।

वृत्तिः – आभ्यां स्तोमस्य सस्य मूर्धन्यः समासे। ज्योतिष्टोमः। आयुष्टोमः। समासे किम्? ज्योतिषः स्तोमः।

व्याख्यानम् – ज्योतिरायुर्भ्यां परस्य स्तोमशब्दस्य सकारस्य षकारादेशो भवति समासे इति सूत्रार्थः। समासाभावे व्यस्ते न षत्वमित्यर्थः।

**काशिकावृत्तिः –**

ज्योतिस्, आयुस् – इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे। ज्योतिष्टोमः, आयुष्टोमः। ज्योतिःष्टोम, आयुःष्टोमः। समासे इत्येव – ज्योतिः स्तोमं दर्शयति।

**व्याकरणसिद्धान्तसुधानिधिः –**

ज्योतिरायुर्भ्यां परस्य स्तोमस्य सस्य षः स्यात्। ज्योतिष्टोमः। आयुष्टोमः।

**वैयाकरणसिद्धान्तकौमुदी –**

984.मातृपितृभ्यां स्वसा। (8–3–84) – वैयाकरणसिद्धान्तकौमुद्याम् अलुक् समासप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे चतुरशीतितमं सूत्रमस्तीदम्।

वृत्तिः – आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। असमासे तु मातुः स्वसा, पितुः स्वसा।

व्याख्यानम् – मातृपितृभ्यां परस्य स्वसृशब्दस्थादिमसकारस्य षत्वं स्यात् समासे इति सूत्रार्थः। मातृष्वसा इति उदाहरणम्। समासाभावे तु न षत्वमिति आशयः।

**काशिकावृत्तिः –**

मातृ, पितृ–इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति। मातृष्वसा। पितृष्वसा।

**व्याकरणसिद्धान्तसुधानिधिः –**

आभ्यां परस्य स्वसुः ष स्यात् समासे। मातृष्वसा पितृष्वसा। समासे किम्? मातुः स्वसा। पितुः स्वसा इति वाक्ये मा भूत्। अलुक्समासे तु विकल्पो वक्ष्यते।

**अयं भावः** – समासपदाभावे मातुः स्वसा इति वाक्येऽपि षत्वं स्यात्। मातुःष्वसा, मातुःस्वसा इति अलुक्समासे विकल्पेन षत्वं वक्ष्यते मातुःपितुर्भ्यामिति सूत्रेणेति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

983.मातुः पितुर्भ्यामन्यतरस्याम्। (8–3–85) – वैयाकरणसिद्धान्तकौमुद्याम् अलुक्समासप्रकरणे इदं सूत्रं वर्तते वा षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे पञ्चाशीतितमं सूत्रं भवति इदम्।

वृत्तिः – आभ्यां स्वसुः सस्य षो वा स्यात्समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा। पितुःस्वसा।

व्याख्यानम् – मातुः स्वसा इति विग्रहे समासे विभाषा स्वसृपत्योः इति सूत्रेण विकल्पेन अलुकि मातुःस्वसा इति षष्ठीसमासे प्रकृतसूत्रेण विकल्पेन षत्वे मातुःष्वसा तदभावे मातुस्वसा इति रूपद्वयं सिध्यति।

**काशिकावृत्तिः** –

मातुर्, पितुर् इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्धन्यादेशो भवति समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। मातुः पितुरिति रेफान्तयोरेतद्ग्रहणम्। एकदेशविकृतस्य अनन्यत्वाद् विसर्जनीयान्तात् सकारान्ताच्च षत्वं भवति। समास इत्येव वाक्ये मा भूत्। मातुः स्वसेत्येव नित्यं भवति।

**अयं भावः** – प्रकृतसूत्रेण समासे विकल्पेन षत्वं भवति। मातुर्, पितुर् इति रेफान्तयोर्ग्रहणम्। एकदेशविकृतस्यानन्यत्वात् विसर्जनीयान्तात् सकारान्तात् च षत्वं भवति। समासे इति कथनात् वाक्ये न भवतीति भावः।

**महाभाष्यम्** –

सान्ताभ्यां च। सान्ताभ्यां चेति वक्तव्यम्। इहापि यथा स्यात् मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। मातुपितुरिति सान्तग्रहणानर्थक्यमे– कदेशविकृतस्यानन्यत्वात्। मातुःपितुरिति सान्तग्रहणमनर्थकम्। किं कारणम्? एकदेशविकृतस्यानन्यत्वात्। एकदेशविकृतमनन्यवद्भवतीति सान्तस्यापि भविष्यति।

**अयं भावः** – एकदेशविकृतस्यानन्यत्वात् सान्ताभ्यामिति वक्तव्यं नास्ति इति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

षष्ठ्यन्ताभ्यां मातुःपितुरित्याभ्यां स्वसुः सस्य षो वा स्यात्। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। ऋतो विद्यायोनिसम्बन्धेभ्य इति षष्ठ्या अलुक्।

**अयं भावः** – ऋतो विद्यायोनीति नित्ये प्राप्ते विभाषेति सूत्रेण विकल्पेन अलुगिति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

3193.अभिनिसः स्तनः शब्दसंज्ञायाम्। (8–3–86) – वैयाकरणसिद्धान्त– कौमुद्याम्

उत्तरकृतदन्तप्रकरणे वर्तते इदं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे षडशीतितमं सूत्रं वर्तते इदम्।

वृत्तिः – अस्मात्स्तनः सस्य मूर्धन्यः। अभिनिष्टानो वर्णः। शब्दसंज्ञायां किम्? अभिनिःस्तनति मृदङ्गः।

व्याख्यानम् – अभिनिसः परस्य स्तनसकारस्य षकारादेशो भवति शब्दसंज्ञायां गम्यमानायाम् इति सूत्रार्थः। अभिनिष्टानो वर्ण इति उदाहरणम्। अभिनिःस्तनति मृदङ्ग इत्यत्र शब्दसंज्ञाभावात् न षत्वमिति भावः।

**काशिकावृत्तिः** –

अभिभ, निस् – इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम्। अभिनिष्टानो वर्णः। अभिनिःस्तानो वर्ण। अभिनिःष्टानो विसर्जनीयः, अभिनिःस्तानो विसर्जनीयः। शब्दसंज्ञायामिति किम्? अभिनिःस्तनति मृदङ्गः। समासे इति अतः प्रभृति निवृत्तम्।

**अयं भावः** – प्रकृतसूत्रेण विकल्पेन षकारादेशो भवति। अत्र समासे इत्यस्यानुवृत्तिः नास्तीति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

2472.उपसर्गप्रादुर्भ्यामस्तिर्यच्परः।(8–3–87) – वैयाकरणसिद्धान्तकौमुद्याम् अदादिप्रकरणे वर्तते इदं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे सप्ताशीतितमं सूत्रमस्ति।

वृत्तिः – उपसर्गेणः प्रादसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परः किम्? – अभिस्तः।

व्याख्यानम् – उपसर्ग, प्रादुस् अनयोर्द्वन्द्वः। य् अच् अनयोर्द्वन्द्वः। यचौ परौ यस्मात् स इति बहुव्रीहिः। अस्तिरिति प्रथमा षष्ट्यर्थे वर्तते। प्रादुस् इति सकारान्तमव्ययम्। यच्परकत्वे उदाहरणम् – प्रादुःष्यात् इति। अच्परकत्वे निषन्ति इति। एकञ्च उपसर्गस्थादिणः परस्य प्रादुसश्च परस्य अस्धातोः सकारस्य षकारादेशो भवति यच्चरकत्वे इति भावः।

**काशिकावृत्तिः** –

उपसर्गस्थान्निमित्तात् प्रादुस्शब्दाच्चोत्तरस्य यकारपरस्याच्परस्य चास्तिसकारस्य मूर्धन्यो भवति। अभिषन्ति। निषन्ति, विषन्ति, प्रादुःषन्ति। अभिष्यात्, निष्यात्, विष्यात्, प्रादुःष्यात्। उपसर्गादिति किम्? दधि स्यात्। मधु स्यात्। अस्तीति किम्? अनुसृतम्। विसृतम्। अथासत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्ग आश्रीयते, प्रादुस्शब्दस्य च कृभ्वस्तिष्वेव प्रयोगः इत्यत्राप्रसङ्गः? तथाप्येतत् प्रत्युदाहर्तव्यम् – अनुसूते, अनुसूः, अनुस्वोऽपत्यम् आनुसेयः। शुभ्रादित्वड्ढक्, ढ्रे लोपोऽकद्रवा इत्युवर्णलोप। यच्पर इति किम्? निस्तः। विस्तः। प्रादुस्तः।

**अयं भावः** – यकारपरस्याच्परस्य च अस्तिसकारस्य षकारादेशो भवति उपसर्गस्थान्निमित्तात्प्रादुस्शब्दाच्चेति सूत्रार्थः। अभिषन्ति इत्यादीनि उदाहरणानि। उपसर्गादित्यभावे दधि स्यादित्यादावपि षत्वं स्यात्। अस्तीत्यभावे अनुसृतमित्यादावपि षत्वं स्यात्। यच्पर इत्यभावे निस्त इत्यादौ अपि षत्वं स्यात्। अतस्सर्वाणि दलानि सार्थकानि उक्तानीति भावः।

**महाभाष्यम्** –

अस्तिग्रहणं किमर्थम्? इह मा भूत्, अनुसृतम्। विसृतमिति। नैतदस्ति प्रयोजनम् – यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चैतं सकारं प्रति क्रियायोगः। इहापि तर्हि न प्राप्नोति। अभिषन्ति, विषन्तीति। न ह्यस्ति क्रियावचनः, कः पुनराह नास्ति क्रियावचन इति। क्रियावचनोऽस्ति। आतश्च क्रियावचनः – व्यत्यनुषते। कर्तरि कर्मव्यतिहारे इत्यात्मनेपदं भवति। कर्मव्यतिहारश्च कः? क्रियाव्यतिहारः। प्रादुस्शब्दात्तर्हि मा भूत्। प्रादुस्शब्दश्च नियतविषयः। कृभ्वस्तियोग एव वर्तते। उपसर्गात्तर्हि स्यतेर्मा भूदिति। इष्यते उपसर्गात्स्यतेः षत्वम्। आतश्चेष्येते – एवं तर्हि ह्याह – उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् इति। प्रादुस्शब्दात्तर्हि स्यतेर्मा भूत्। प्रादुस्शब्दस्य नियतविषयः कृभ्वसितयोग एव वर्तते। इदं तर्हि प्रयोजनमिह मा भूत्– अनुसूतेरप्रत्ययः। (अनुसूः) अनुस्वोऽपत्यमानुसेयः।

**अयं भावः** – अस्तिग्रहणाभावे अनुसृतमित्यादौ षत्वं स्यात्। प्रादुस्शब्दो नियतविषयः कृभ्वस्तियोगे एव वर्तते। स्यतेः उपसर्गात् प्रयोगे उपसर्गादित्यनेन षत्वमिति भावः।

**व्याकरणसिद्धान्तसुधानिधिः** –

निसन्तादुपसर्गात्प्रादुसश्च परस्यास्तेः सस्य षः स्यात् यकारेऽचि परे। अभिष्यात्, निष्यात्, प्रादुःष्यात्। अभिषन्ति, विषन्ति। व्यतिषाते, व्यतिष्वहे, व्यतिष्महे। प्रादुःषन्ति श्नसोरित्यल्लोपः। अच्परः किम्? अभिस्तः। व्यतिस्ते, व्यतिसे इत्यत्र सस्य प्रत्ययावयवत्वात् सिचेति अस्तिसकारस्याप्यत्र लोपात्। स्यादेतत्, उपसर्गप्रादुर्भ्यामित्येवास्तु अस्तिग्रहणे प्रयोजनाभावात्। आभ्यां परस्य सस्य इत्येव सिद्धेः। न चानुसृत इत्यादावतिप्रसङ्ग उपसर्गपदेन तदभावात्। सकारापेक्षोपसर्गत्वस्य धात्वन्तरेऽनुपपत्तेस्तावेव पर्यवसानात्।

न च षोऽन्तकर्मणीत्यस्य ओतः श्यनीत्योकारलोपे तत्रापि प्रसङ्गः। उपसर्गादिति सूत्रेण अनुसूते इत्यादौ षत्वस्येष्टत्वात्। प्रादुसोऽपि कृभ्वस्तियोगनिपतविषयतया कृभ्वोस्सकाराभावादिति प्रसक्तेरभावादिति चेदत्र भाष्यम् – अनुपूर्वात्सूतेः क्विप्। अनुसूते इत्यनुसूः अनुस्वोरपत्यं यः अनुसूः। ढ्रेलोपोऽकद्रवा इत्युकारलोपः। अत्र षत्ववारणार्थम् अस्तिग्रहणमिति।

**अयं भावः** – सकारापेक्षोपसर्गत्वस्य धात्वन्तरेऽनुपपत्तेः उपसर्ग, प्रादुस् इत्येतावेव भवत इति पर्यवसानात् अस्तिग्रहणस्य किं प्रयोजनम्? अति चेत् अनुसूरित्यत्र षत्ववारणार्थम् अस्तिग्रहणम् इति भावः।

**वैयाकरणसिद्धान्तकौमुदी** –

2477.सुविनिर्दुर्भ्यः सुपिसूतिसमाः। (8–3–88) – वैयाकरणसिद्धान्तकौमुद्याम् अदादिप्रकरणे

वर्तते इदं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे अष्टाशीतितमं सूत्रमिदम्। वृत्तिः – एभ्यः सुप्यादेः सस्य षः स्यात्। पूर्वं धातुरुपसर्गेण युज्यते। किति लिटि परत्वात्सम्प्रसारणे षत्वे च कृते द्वित्वम्। पूर्वत्रासिद्धीयमद्विर्वचने। सुषुषुपतुः, सुषुषुपुः। पिति तु द्वित्वेऽभ्यासस्य संप्रसारणम्। षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिः शेष। नित्यत्वाच्च। ततः सुपिरुपाभावान्न षः। सुसुष्वाप।

व्याख्यानम् – सुषुषुपतुरित्यत्र पूर्वं धातुरिति नियमेन द्वित्वात्प्रागेव परत्वात्सम्प्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुप् इत्यस्य कृतषत्वस्य द्वित्वे सति खण्डद्वयेऽपि षकारश्रवणं निर्बाधमित्यर्थः। द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वात् कथं षत्वमिति चेत् पूर्वत्रासिद्धीयमद्विर्वचने इति परिभाषया सिध्यति।

**काशिकावृत्तिः** –

सु,वि,निर्,दुर् – इत्येतेभ्य उत्तरस्य सुपि, सूति, सम–इत्येतेषां सकारस्य मूधन्यादेशो भवति। सुपि इति स्वपिः कृतसम्प्रसारणो गृह्यते। सुषुप्तः। विषुप्तः। निषुप्तः। दुषुप्तः। सूति इति स्वरूपग्रहणम्। सुषूतिः। विषूतिः। निःषूतिः। दुःषूतिः। सम–सुषमम्, विषमम्, निःषमम्, दुःषमम्।

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केचन।
हलादिशेषान्न□सुपिरिष्टं पूर्वं प्रसारणम्।।

स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपि।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते।।

पूर्वत्रासिद्धीयमद्विर्वचने इति कृते षत्वे ततो द्विर्वचने।

**महाभाष्यम्** –

किमर्थं स्वपेः सुपिभूतस्य ग्रहणं क्रियते? सुपेः षत्वं स्वपेर्मा भूत्। सुपेः षत्वं स्वपेर्मा भूत्। सुपेः षत्वमुच्यते तत्स्वपेर्मा भूदिति। सुस्वप्नः विस्वप्नमिति। विसुष्वापेति केन। विसुष्वापेत्यत्र कस्मान्न भवति। हलादिशेषान्न□ सुपिः। हलादिशेषे कृते नैष सुपिर्भवति। इदमिह सम्प्रधार्यं हलादिशेषः क्रियतां सम्प्रसारणमिति। किमत्र कर्तव्यम्? परत्वाद्धलादिः शेषः। इष्टं पूर्वं सम्प्रसारणम्। इष्यते हलादिशेषात्पूर्वं सम्प्रसारणम्। आतश्चेष्यते एवं तर्हि ह्याह – अभ्याससम्प्रसारणं हलादिशेषाद्विप्रतिषेधेनेति। एवं तर्हि स्थादिष्वभ्यासेन चाभ्यासस्येति एतस्मान्नियमान्न भविष्यति। स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपि। प्राक्सितसंशब्दनात्स नियम उत्तरश्च सुपि पठ्यते। एवं तर्ह्यर्थवद्ग्रहणेनानर्थकस्येत्येवमेतस्य न भविष्यति। अनर्थके विषुषुपुः। यद्यर्थवतो ग्रहणं विषुषुपुरिति न सिध्यति। नैष दोषः। कथम्? सुपिभूतो द्विरुच्यते। सुपिभूतस्य द्विर्वचनम्।

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केचन।
हलादिः शेषान्न□सुपिरिष्टं पूर्वं प्रसारणम्।।1।।

स्थादीनां नियमो नाऽत्र प्राक्सितादुत्तरः सुपि।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते।।2।।

**व्याकरणसिद्धान्तसुधानिधिः** –

एभ्यः परेषामेषां सस्य षः स्यात्। सुपीति कृतसम्प्रसारणस्य स्वपेः निर्देशः। सुषुप्तः, सुषुप्तिः। सुष्वाप इत्ययुक्तमिति वर्धमानः। किति लिटि पूर्वं धातूपसर्गसम्बन्धे द्वित्वं बाधित्वा परत्वात् सम्प्रसारणे उक्तवाक्येन षत्वं ततः षत्वविशिष्टस्यैव द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचन इत्युक्तेः। सुषुषुपतुः। सुषुषुपुरिति। अकिति तु सम्प्रसारणाभावाद्द्वित्वं ततो लिट्यभ्यासस्योभयेषामित्यभ्यासस्य सम्प्रसारणम्। ततः षत्वस्यासिद्धतया विप्रतिषेधानर्हत्वान्नित्यत्वाच्च हलादिशेष, तेन पकारलोपे स्वपिरुपत्वाभावान्न षत्वं सुषुष्वाप सुस्वप्तेत्याद्येव रूपम्। यद्भाष्यम्। सुपेः षत्वमित्यादि।

**वैयाकरणसिद्धान्तकौमुदी** –

3082.निनदीभ्यां स्नातेः कौशले। (8–3–89) – वैयाकरणसिद्धान्तकौमुद्यां पूर्व कृदन्तप्रकरणे वर्तते इदं षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे एकोननवतितमं सूत्रमिदम्।

वृत्तिः – आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये। निष्णातः[5] शास्त्रेषु। नद्यां स्नातीति नदीष्णः। सुपि इति कः।

3083.सूत्रं प्रतिष्णातम्। (8–3–90) – वैयाकरणसिद्धान्तकौमुद्यां पूर्वकृदन्तप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे नवतितमं सूत्रं वर्तते।

वृत्तिः – प्रतेः स्नातेः षत्वम्। प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः। अन्यत्र प्रतिस्नातम्।

3084.कपिष्ठलो गोत्रे। (8–3–91) – वैयाकरणसिद्धान्तकौमुद्यां पूर्वकृदन्तप्रकरणे इदं षत्वनिपातनसूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे एकनवतितमं सूत्रं वर्तते।

वृत्तिः – कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः। गोत्रे किम्? कपीनां स्थलम् कापिस्थलम्।

2917.प्रष्ठोऽग्रगामिनी। (8–3–92) – वैयाकरणसिद्धान्तकौमुद्यां पूर्वकृदन्तप्रकरणे इदं सूत्रं वर्तते षत्वनिपातनविधायकम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे द्विनवतितमं सूत्रं वर्तते।

वृत्तिः – प्रतिष्ठत इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः। अग्र इति किम्? प्रस्थः।

3233.वृक्षासनयोर्विष्टरः। (8–3–93) – वैयाकरणसिद्धान्तकौमुद्याम् उत्तरकृदन्तप्रकरणे इदं सूत्रं वर्तते षत्वविपातनविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे त्रिनवतितमं सूत्रं वर्तते इदम्।

वृत्तिः – अनयोर्विपूर्वस्य स्त्रः षत्वं निपात्यते। विष्टरो वृक्ष आसनं च। वृक्ष इति किम्? वाक्यस्य विस्तरः।

3206.छन्दोनाम्नि च। (8–3–94) – वैयाकरणसिद्धान्तकौमुद्याम् उत्तरकृदन्तप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे चतुर्नवतितमं सूत्रं वर्तते।

वृत्तिः – विपूर्वस्य स्तृणातेः घञन्तस्य सस्य षत्वं स्यात् छन्दोनाम्नि। इति षत्वम्।

969.गवियुधिभ्यां स्थिरः। (8–3–95) – वैयाकरणसिद्धान्तकौमुद्याम् अलुक्समासप्रकरणे षत्वनिपातनसूत्रमिदं वर्तते। अष्टाध्याय्यामष्टमाध्याये तृतीयपादे पञ्चनवतितमं सूत्रं वर्तते इदम्।

वृत्तिः – आभ्यां स्थिरस्य सस्य षः स्यात्। गविष्ठिरः। अत्र गवि इति वचनादेवालुक्। युधिष्ठिरः।

3085.विकुशमिपरिभ्यः स्थलम्। (8–3–96) – वैयाकरणसिद्धान्तकौमुद्याम् पूर्वकृदन्तप्रकरणे षत्वविधायकसूत्रमिदं वर्तते। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे षण्णवतितमं सूत्रमिदं वर्तते।

वृत्तिः – एभ्यः स्थलस्य सस्य षः स्यात्। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।

2918.अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः। (8–3–97) – वैयाकरणसिद्धान्तकौमुद्यां पूर्वकृदन्तप्रकरणे इदं सूत्रं वर्तते षत्कविधायकम्। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे सप्तनवतितमं सूत्रमिदं वर्तते।

वृत्तिः – स्थ इति कप्रत्ययान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्यः स्थस्य सस्य षः स्यात्। द्विष्ठः। त्रिष्ठः। इत ऊर्ध्वं कर्मणि, सुपि इति द्वयमप्यनुवर्तते। तत्राकर्मकेषु सुपि इत्यस्य सम्बन्धः।

1024.सुषामादिषु च। (8–3–98) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे षत्वविधायकं सूत्रमिदम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे अष्टनवतितमं सूत्रमिदं वर्तते।

वृत्तिः – सस्य मूर्धन्यः। शोभनं साम यस्य सुषामा। सुषन्धिः। एवमेव गणे विद्यमाना अन्ये शब्दा अपि द्रष्टव्याः। सुषामा, निःषामा, दुःषामा, सुषेधः, निःषेधः, दुःषेधः, सुषन्धिः, निःषन्धिः, दुःषन्धिः, सुष्ठु, दुष्ठु, गौरिषक्थः संज्ञायाम्, प्रतिष्णिका, जलाषाहम्, जलाषाडम्, नौषेचनम्, दुन्दुभिषेवणम्, दुन्दुभिषेचनम्।

1025.एति संज्ञायामगात्। (8–3–99) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे इदं षत्वविधायकं सूत्रमस्ति। अष्टाध्यायाम् अष्टमाध्यायस्य तृतीयपादे नवनवतितमं सूत्रमिदं वर्तते।

वृत्तिः – सस्य मूर्धन्यः। हरिषेणः। एति किम्? हरिसक्थम्। संज्ञायां किम्? पृथुसेनः। अगकारात् किम्? विष्वक्सेनः। इण्कोः इत्येव सर्वसेनः।

1027.नक्षत्राद्वा। (8–3–100) – वैयाकरणसिद्धान्तकौमुद्यां समासाश्रयविधिप्रकरणे इदं षत्वविधायकं सूत्रमस्ति। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे शततमं सूत्रमिदम्।

वृत्तिः – एति सस्य संज्ञायामगकारात् मूर्धन्यो वा। रोहिणीषेणः/ रोहिणीषेनः। अगकारात् किम्? शतभिषक्सेन आकृतिगणोऽयम्।

1327.ह्रस्वात्तादौ तद्धिते। (8–3–101) – वैयाकरणसिद्धान्तकौमुद्यां शैषिकप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे एकाधिकैकशततमं सूत्रमिदम्।

वृत्तिः – ह्रस्वादिणः परस्य सस्य षः स्मात्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः।

2403.निसस्तपतावनासेवने। (8–3–102) – वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरणे इदं सूत्रं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे द्व्यधिकैकशततमं सूत्रमिदम्।

वृत्तिः – षः स्यात्। आसेवनं पौनःपुन्यम्। ततोऽन्यस्मिन् विषये। निष्टपति।

3640.युष्मत्तत्ततक्षुष्वन्तःपादम्। (8–3–103) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रियाप्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टामध्यायस्य तृतीयपादे त्र्यधिकैकशततमं सूत्रमिदम्।

वृत्तिः – पादमध्यस्थस्य सस्य मूर्धन्यः स्यात् तकारादिषु परेषु। युष्मदादेशाः त्वन्त्वातेतवाः। त्रिभिष्ट्वं देवसवितः तेभिष्ट्वा। आभिष्टे। अष्टवग्रे सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। अन्तःपादं किम्? – तादग्निस्तदर्थमा। यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपदस्यान्तो न तु मध्यः।

3641.यजुष्येकेषाम्। (8–3–104) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रकिया प्रकरणे सूत्रमिदं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे चतुरधिकैकशततमं सूत्रं वर्तते।

वृत्तिः – युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा। अर्चिभिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिभिस्त्वमित्यादि।

3642.स्तुतस्तोमयोश्छन्दसि। (8–3–105) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रियाप्रकरणे सूत्रमिदं वर्तते। अष्टाध्याय्याम् अष्टमाध्यायस्य तृतीयपादे पञ्चाधिकैकशततमं सूत्रं वर्तते।

वृत्तिः – एतयोः परतः सस्य षत्वं स्यात्। नृभिष्टुतस्य, नृभिः स्तुतस्य। गोष्टोमम्। गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थम्।

3643.पूर्वपदात्। (8–3–106) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रिया प्रकरणे इदं सूत्रं वर्तते षत्वविधायकम्। अष्टाध्याय्यामष्टमाध्यायस्य तृतीयपादे षडधिकैकशततमं सूत्रमिदं वर्तते।

वृत्तिः – पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा स्यात्। यदिद्राग्नी दिविष्ठः। युवं हि स्थः स्वर्यती।

3644.सुञः। (8–3–107) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रियाप्रकरणे सूत्रमिदं वर्तते। अष्टाध्याय्याम् अष्टामध्यायस्य तृतीयपादे सप्ताधिकैकशततमं सूत्रमिदम्। वृत्तिः – पूर्वपदस्थान्निमित्तात्परस्य सूञो निपातस्य सस्य षः। ऊर्ध्व अषुणः। अभीषुणः।

3645.सनोतेरनः। (8–3–108) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रियाप्रकरणे सूत्रमिदं वर्तते। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे अष्टाधिकैकशततमं सूत्रमिदं वर्तते।

वृत्तिः – अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षश्छन्दसि। गीषा इन्दो नृषा असि। अनः किम्? गोसनिः।

3646.सहेः पृतनर्ताभ्यां च। (8–3–109) – वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रक्रियाप्रकरणे सूत्रमिदं वर्तते षत्वविधायकम्। अष्टाध्याय्याम् अष्टमाध्याये तृतीयपादे नवाधिकैकशततमं सूत्रमिदम्।

वृत्तिः – पृतनर्ताभ्यां परस्य सहेः सस्य षः स्यात्। पृतनाषाहम्। ऋताषाहम्। चात् ऋतीषाहम्। न रपरेति सूत्रमारभ्य निव्यभिभ्योऽड्व्यवाये इति सूत्रपर्यन्तं दशमिस्सूत्रैः षत्वनिषेध उच्यते। एतावता मूर्धन्यादेशप्रकरणं विविधग्रन्थानामा– शयः प्रतिपादनपुरस्सरं व्याख्यायि। इतः परं ष्टुत्वसूत्रं व्याख्यायते।

113.ष्टुना ष्टुः। (8–4–41) – वैयाकरणसिद्धान्तकौमुद्यां हल्सन्धिप्रकरणे सूत्रमिदं ष्टुत्वविधायकम् अस्ति। अष्टाध्याय्याम् अष्टमाध्यायस्य चतुर्थपादे एकचत्वारिंशत्तमं सूत्रमिदम्।

वृत्तिः – स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

व्याख्यानम् – स्तोः श्चुनेति सूत्रात् स्तोरित्यनुवर्तते। सकारतवर्गायोः षकारवर्गाभ्यां योगे षकारटवर्गौ स्त इति सूत्रार्थः।

उदाहरणम् – रामष्षष्ठ इत्यादि। रामस्+षष्ठ इत्यवस्थायां सकारस्य षकारेण योगात् प्रकृतसूत्रेण षकारे रामष्षष्ठ इति रूपं सिध्यति। षट् सन्त इत्यादौ ष्टुत्वे प्राप्ते न पदान्ताट्टोरनाम् इति सूत्रेण निषिध्यते। सन्षष्ठ इत्यादौ ष्टुत्वे प्राप्ते तोः षि इति सूत्रेण निषिध्यते। एवञ्च इदमपि सूत्रं सकारस्य षत्वविधायकमस्तीति संगृहीतं प्रकृते।

क्व षत्वं न भवति इति केचन निषेधा उक्ताः। यथा – सात्पदाद्योः सस्य षत्वं न स्यादित्यर्थकेन सात्पदाद्योरिति सूत्रेण षत्वनिषेध उच्यते। तेन दधि सिञ्चतीत्योदौ न षत्वम्। सिचः सस्य षो न स्याद्यङि इत्यर्थकेन सिचो यङीति सूत्रेण षत्वनिषेध उच्यते। तेन निसेसिच्यते इत्यादौ न षत्वम्। गत्यर्थस्य सेधतेः षत्वं न स्यादित्यर्थकेन सेधतेर्गतौ इति सूत्रेण षत्वनिषेध उच्यते। तेन विसेधतीत्यादौ न षत्वम्। अत्र षत्वं न स्यादित्यर्थकेन प्रतिस्तब्धनिस्तब्धौ च इति सूत्रेण षत्वनिषेध उच्यते। तेन निपातनेन इमौ शब्दौ सिध्यतः।

सोढ्रूपस्य सहेः सस्य षत्वं न स्यादित्यर्थकेन सोढ इति सूत्रेण षत्वनिषेध उच्यते। तेन परिसोढेत्यादौ न षत्वम्। उपसर्गनिमित्त एषां सस्य षो न स्याद्यङि इत्यर्थकेन स्तम्भुसिवुसहां चङि इति सूत्रेण षत्वनिषेध उच्यते। तेन अवातस्तम्भदित्यादौ न षत्वम्।

स्ये सनि च परे सुञः षो न स्यादित्यर्थकेन सुनोतेः स्यसनोः इति सूत्रेण षत्वनिषेध उच्यते। तेन विसेष्यतीत्यादौ न षत्वम्। सदिष्वञ्जोरभ्यासात्परस्य षत्वं न स्याल्लिटि इत्यर्थकेन सदिष्वञ्जोः परस्य लिटि इति सूत्रेण षत्वनिषेध उच्यते। तेन निषसादेत्यादौ न षत्वम्। सस्य मूर्धन्य इत्यर्थकेन निव्यभिभ्योऽड्व्यवाये छन्दसि इति सूत्रेण वा मूर्धन्यनिषेध उच्यते। तेन न्यषीदत्/न्यसीदत् इति सिध्यति।

**बाध्याबाधकभावविचारः** –

कुप्वोः क पौ च, सोऽपदादौ, इणः ष इति सूत्रत्रयाधिकारे जिह्वामूलीयोपध्मानीयविसर्ग–

सकारषकारादेशा विधीयन्ते। अत्र इण उत्तरस्य षो विधीयते। तद्भिन्नात्सकारो विधीयते। एतयोरभावे विसर्गादिकमिति विषयविवेकः। एतेषां त्रिपादीस्थत्वेऽपि प्रकरणे प्रकरणमसिद्धं न तु योगे योग इति

भाष्यात् पूर्वं प्रति परमसिद्धमिति असिद्धत्वव्यवस्थाऽत्र नान्वेति। उणादीनामव्युत्पत्तिपक्षस्य सिद्धान्तित्वात् सर्पिष्पाशमित्यादौ इदुदुपधेति सिद्धे इणः ष इति अधिकारो ज्ञापयति। क्वचित् व्युत्पत्तिपक्षस्यापि अस्तित्वं बोधयति। निष्प्रत्यूहमित्यादौ पूर्वविषयत्वाभावात् इणः षेति षत्वं न प्रवर्तते इति इदुदुपधेति सूत्रमावश्यकमेव। मातुः कृपा, मातुः कार्यं करोतीत्यादौ षत्वे प्राप्ते कस्कादिगणे भ्रातृपुत्रशब्दपाठात् एकादेशशास्त्रनिमित्तकस्य षत्वाभावः ज्ञाप्यते। द्विष्कृत्वा, द्विष्करोतीत्यादौ सुचः प्रत्ययत्वात् विसर्गस्य प्रत्ययावयवत्वात् इदुदुपधेति अप्राप्ते विकल्पेन विधीयते। तदभावे क पौ, विसर्गश्च भवन्ति। एवं च द्विष्करोति, द्विःकरोति, द्वि करोति इति रूपाणि सिध्यन्ति। द्विः नाम कश्चित् व्यक्तिविशेषः। तदा द्विः करोति इति षत्वं न भवति। कृत्वोऽर्थेऽविद्यमानत्वात्। एवमेव चतुष्करोतीत्यत्र षत्वं भवति। परन्तु चतुष्कपाल इत्यत्र न षत्वम्।

सर्पिष्करोतीत्यादौ व्युत्पत्तिपक्षे प्रत्ययावयवत्वात् इदुदुपधेति अप्राप्तौ विभाषाविधायकम् इसुसोरिति। अव्युत्पत्तिपक्षे नित्ये प्राप्ते तद्बाधित्वा विकल्पविधानार्थं सूत्रमावश्यकम्। सामार्थ्याभावेऽनेन न षत्वम्। परन्तु सर्पिष्कुण्डिकाशब्दविषये विशेषः। नित्यं समसेतिसूत्रेण षत्वे सिद्धे कस्कादिषु सर्पिष्कुण्डिका शब्दपाठेन सामर्थ्याभावेऽपि षत्वमुच्यते व्यपेक्षायां नित्यञ्च। यथा – सर्पिष्कुण्डिका – सामर्थ्याभावे तु तिष्ठतु सर्पिष्कुण्डिकामानयेति। व्यपेक्षायां तु इदं सर्पिष्कुण्डिकाया इति च। एवं च इणः ष इत्यधिकारे सूत्राणां बाध्यबाधकविचारः कृतः।

अधुना मूर्धन्यादेशप्रकरणे बाधबाधकभावविचारः क्रियते। अत्रापि अधिकारत्रयमस्ति – अपदान्तस्य मूर्धन्यः, सः, इण्कोः इति। षविधानं परित्यज्य मूर्धन्यविधानमग्रे इणः षीध्वमिति सूत्रे ढविधानार्थम्।

नुम्विसर्जनीयसूत्रेऽपिग्रहणाद् व्यवधानाभावे तु षत्वं भवत्येवेत्यर्थः। अन्यथा आदेशप्रत्ययादिसूत्राणां बाध्यत्वं स्यात्। अयोगवाहानाम् अट्सूपदेशस्योक्तत्वात् विसर्जनीयग्रहणं त्यक्तुं शक्यम्। नुमः अनुस्वारोपलक्षणत्वे तदपि अकर्तुं शक्यम्। अग्निसात्करोति, दधि सिञ्चति इत्यादौ आदेशप्रत्ययेति षत्वं प्राप्नोति परन्तु सात्पदाद्योरिति षत्वनिषेधः क्रियते। कृसर इत्यादौ व्युत्पत्तिपक्षे प्रत्यावयवत्वात् षत्वं प्राप्नोति। परन्तु अव्युत्पत्तिपक्षस्य सिद्धान्तितत्वात् अबुधबोधानाम् व्युत्पद्यमाना इमे उणादयो व्युत्पत्तिनिमित्तं कार्यं न लभन्ते। अतो व्युत्पत्तौ क्रियमाणायामपि तन्निमित्तकार्याभावात् न षत्वमिति आशयः। सरीसृप्यते इत्यादौ द्विःप्रयोगो द्विर्वचनमिति भाष्यात् आदेशरूपाभावात् सकारस्य न षत्वम्। शासिवसिसूत्रे घसिग्रहणात् आदेशावयवस्य न षत्वमिति ज्ञाप्यते। तुष्टूषतीत्यादौ आदेशप्रत्ययेति षत्वे प्राप्ते तद् बाधित्वा स्तौतिण्योरेवति सूत्रं प्रवर्तते। तेन सिद्धे इदं नियमार्थम्। स्तौतिण्योरेवेति। प्राक्सितादड्व्यवायेऽपि इति अपिग्रहणात् अव्यवधाने षत्वं भवत्येव। अन्यथा व्यवधाने उपसर्गादिति सूत्रं बाधित्वा सितपर्यन्तमेव षत्वं स्यात्। अतोऽव्यवधाने व्यवधाने च षत्वं सिध्यति।

अभितष्ठौ इत्यादौ अवर्णान्ताभ्यासव्यवधानेऽपि षत्वं यथा स्यात्। स्थादिष्विति सूत्रेण अषोपदेशस्यापि सस्य षत्वं विधीयते। अभिषुणोतीत्यादौ आदेशप्रत्ययेति षत्वे प्राप्ते सात्पदाद्योरिति निषेध उच्यते। तद् बाधित्वा पुनः षत्वविधानार्थमिदं सूत्रम् उपसर्गात्सुनोत्यादि। इणन्तत्वाभावेऽपि अवाच्चेति कथनात् अवष्टभ्येत्यादौ षत्वं सिध्यति। परिष्टौति इत्यत्र उपसर्गादिति सिद्धे पुनः षत्वारम्भः सिवादीनां वाडिति नियमार्थः। मूर्धन्याधिकारे नुम्विसर्जनीयेत्यादिना अविशेषेण षत्वमुक्तम्। शास्यादिसूत्रेण धातूनां षत्वमुक्तम्। स्तौतिण्योरेवेति नियमसूत्रम्। प्राक्सितादित्यारम्भः चतुर्दशभिस्सूत्रैः उपसर्गाद्धातूनां षत्वं व्यधापि। समायेऽङ्गुलेः इति सूत्रमारभ्य षड्भिस्सूत्रैः समासविषये षत्वं व्यधायि। अभिनिसः स्तन

इत्यारभ्य चतुर्भिस्सूत्रैः सामान्यतः अविशिष्य षत्वं व्यधीयत। सूत्रं प्रतिष्णातम् इत्यारभ्य पञ्चभिस्सूत्रैः विभिन्नरूपाणि निपातितानि गवियुधिभ्यामित्यारभ्य अष्टभिस्सूत्रैः, विभिन्नशब्दानां षत्वं प्रत्यपादि। युष्मत्तत्तदित्यारभ्य सप्तभिस्सूत्रैः वैदिकप्रक्रियासन्दर्भे षत्वं व्यधायि। न रपर इति सूत्रमारभ्य दशभिस्सूत्रैः षत्वनिषेधः प्रत्यपाद्यत।

परिस्थितिः इत्यादौ निमित्तसद्भावे उपसर्गादिति कुतो न षत्वमिति चेत् यत्क्रियायुक्ताः प्रादय तम्प्रत्येव गत्युपसर्गसंज्ञे भवत इति भाष्यात् परिगता स्थितिः परिस्थितिः इति स्थितेश्च गतिः पर्यचिन्ति।

एवं च अपदान्तस्य मूर्धन्य इत्यधिकारे समागतानां सूत्राणां बाध्यबाधकावविचारो व्यधायि।

## ***सन्दर्भसूची***


1. णत्ववदिति भावः। – महाभाष्यम्, नुम्विसर्जनीयसूत्रम्, उद्योतः,
2. स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना।
   तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः।।–भट्टिकाव्यम्, सर्गः–06,श्लोकः–23
3. प्रतुष्टूषुः पुनर्युद्धमासिञ्जयिषुर्भयम्। आतस्थौ रथमात्मीनुत्सिसाहयिषन्निव। – भट्टिकाव्यम् – सर्गः – 09, श्लोकः–69
4. यथा विसेचक इत्यत्र गमेरुपसर्गो विशब्दो न सिचेरिति। महाभाष्यम्, उपसर्गात्सूत्रम्, प्रदीपः,
5. चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम्। भट्टिकाव्यम्, सर्गः–09,श्लोकः–82


————————

# ''पाणिनीयाष्टाध्याय्यां षत्वविधायकसूत्राणां बाध्यबाधकभावचिन्तनम्''

**उपसंहारः –**

आचार्यविश्वेश्वरसूरिविरचितव्याकरणसिद्धान्तसुधानिधौ भ्रस्ज्धातोः ओदित्वं निराकृतम्। व्रश्च्धातुः सकारोपधः वर्तते। भृष्ट्, भृष्ड् इति रूपे उक्ते।

इणः षः अत्र कुप्वोः इति अपदादौ इति अनव्ययस्य इति, काम्ये रोरेव इति च सम्बध्यते इत्युक्तत्वात् उच्चैः कल्पं, दोःपाशम्, गीः काम्यतीत्यादौ न षत्वम्। सर्पिष्पाशमित्यादौ पूर्ववत् पाशकल्पकादि।

इणः षः इति सूत्रस्य प्रयोजनं तु सर्पिष्पाशमित्यादौ सत्वनिवृत्तिः गीष्पाशमित्यादौ षत्वप्राप्तिः। अनव्ययस्येत्यादिसम्बन्धात् उच्चैःकल्पम् इत्यादौ न षत्वम् अव्ययविसर्गत्वात्।

एकादेशशास्त्रनिमित्तकस्य न षत्वम्। कस्कादिषु भ्रातृष्पुत्रशब्दस्य पाठात्। तेनेह न – मातुः कृपा।

प्रत्ययभिन्नस्य विसर्गस्येत्यर्थे तु कविभिः कृतमित्यत्रापि षत्वं स्यात्। तत्र भिसः प्रत्ययत्वेऽपि विसर्गमात्रस्य प्रत्ययत्वाभावात्। अत्र 'इदुद्भ्यामप्रत्ययस्य' इत्येतावतैव इदुद्भ्यामुत्तरस्य विसर्गस्येत्यर्थस्य सिद्धत्वादुपधाग्रहणं न कर्तव्यमिति हयवरट्सूत्रे भाष्ये स्थितम् – ''उपधाग्रहणं न करिष्यते। इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम इति। निष्प्रत्यूहमिति। प्रत्यूहो विघ्नः। तस्याभावो निष्प्रत्यूहम्। अर्थाभावे अव्ययीभावः इति।

पुंस्कामा मुहुःकामा इत्यत्र इदुदुपधेति षत्वे प्राप्ते वार्तिकेन निषेध उच्यते। वृत्तिकारैः मुहुस्कामा इति प्रयोगः कृतस्स प्रामादिक इति ।

यत्र द्विः इति कस्यचिन्नाम वर्तते। तत्र द्विः करोति इत्यत्र न षत्वम्। कृत्वोऽर्थे अविद्यमानत्वात्। मनोरमायां तावत् द्वितं त्रितं चतुःपञ्चाशत् इति प्रयोगश्चिन्त्य एव । चतुष्कपालवद् अत्रापि प्राप्तेः। अत एतादृशप्रयोगाः चिन्त्या इत्युक्तम्। अप्रत्ययस्य इत्यस्य प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः। चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिः इति वदन्ति मनोरमायाम्।

सर्पिश्शब्दस्य व्युत्पत्तिपक्षे विसर्गस्य प्रत्ययावयवत्वात् इदुदुपधेति सूत्रेणाप्राप्तौ अनेन विभाषा षत्वम्। षत्वाभावपक्षे सर्पिः करोति, सर्पि करोति इति विसर्गजिह्वामूलीयौ भवतः। एकार्थीभावसामर्थ्यं वृत्तावेव। अतः प्रकृते व्यपेक्षाभावसामर्थ्यम्। आकाङ्क्षायोग्यतासन्निधिवशाद् पदानां यः परस्परान्वयः स व्यपेक्षा। भाष्ये एतादृशं सामर्थ्यमाश्रित्यैव उदाहृतम्। तिष्ठतु सर्पिरित्यादौ सामर्थ्याभावान्नेन षत्वविकल्पः। इदुदुपधेति सूत्रेणापि न षत्वं प्रत्ययावयवत्वात्। एवं च इसुसोः सामर्थ्ये सत्येव षत्वमिति भावः।

नित्यं समासेति सूत्रस्य समासे उत्तरपदेऽविद्यमानस्य इसुसोर्विसर्गस्य नित्यं षकारादेशो भवति कुप्वोः परयोः इति सूत्रार्थः। उदाहरणम्–सर्पिष्कुण्डिकेति। अनुत्तरपदस्थस्य इति किमर्थमुक्तम् इति चेत् परमसर्पिःकुण्डिका इत्यत्र षत्वं न भवेदिति। परमं च सर्पिः परमसर्पिः। तस्य कुण्डिका परमसर्पिःकुण्डिका। अत्र सर्पिः इति पदम् उत्तरपदे वर्तते। अतः अनुत्तरपदस्थपदाभावे अत्रापि षत्वं स्यात् अतस्तत्पदं न्यवेशि। तेन षत्वं न भवति। ननु प्रकृतसूत्रेण सर्पिष्कुण्डिकेति षत्वे सिद्धे पुनः कस्कादिगणे अस्य शब्दस्य पाठः कुत इत्युक्ते तिष्ठतु सर्पिः, कुण्डिकां पश्येत्यादौ असमासे व्यपेक्षाविरहेऽपि षत्वार्थः। पुनश्च इदं सर्पिः कुण्डिकाया इत्यत्र व्यपेक्षायाम् इदं सर्पिष्कुण्डिकाया इति नित्यं षत्वार्थः कस्कादिगणे पुनः सर्पिष्कुण्डिकापाठः कृत इति भावः। एतादृशसन्दर्भे पूर्वेण केनापि सूत्रेण षत्वाभावे षत्वार्थः कस्कादिषु पाठ इति तात्पर्यम्।

कस्कादिगणे इण उत्तरस्य षः। तद्भिन्नाद् सः। गणे इत्थं शब्दा अपठ्यन्त–कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः, सद्यस्कालः, सद्यस्कीः, साद्यस्कः, कांस्कान्, सर्पिष्कुण्डिका, धनुष्कपालम्, बहिष्पलम् (बर्हिष्पलम्), यजुष्पात्रम्, अयस्कान्तः, तमस्काण्डः, अयस्काण्डः, मेदस्पिण्डः, भास्करः, अहस्करः इति कस्कादिराकृतिगणः। अत्र गणे त्रयोदश शब्दाः सकारस्य षट् षकारस्योदाहरणत्वेन न्यगादिषत। अन्येऽपि एतत्समानाश्शब्दा अत्र गणे गण्या इति आकृतिगणोऽयम्।

नुम्विसर्जनीयेत्यत्र एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षत्वम्। पिपठीषु। पिपठीःषु। प्रत्येकम् इति व्याख्यानादनेकव्यवधाने षत्वं न। निंस्व। निंस्से। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात्। तेनेह न – सुहिन्सु। पुंसु। अत एव शर्ग्रहणेन गतार्थता।

आदेशप्रत्ययेति इणः कवर्गाद्वा परस्य आदेशरूपस्य प्रत्ययावयवस्य वा सकारस्य स्थाने षकारादेशो भवतीति सूत्रस्य अर्थः। प्रौढमनोरमायां तु एकापि षष्ठी विषयभेदाद्भिद्यते इति कृत्वा प्रत्ययविषये अवयवार्थिका आदेशविषये अभेदार्थिका च भवतीति लक्षणां विना अभीप्सितार्थः लभ्यते। आदेशविषये यदि अवयवषष्ठी स्वीक्रियेत तर्हि तिस्र इत्यादौ सकारस्य षत्वं स्यादवयवषष्ठीसत्त्वात्सकारस्य। प्रत्ययो यः सकारस्तस्य ष इत्युक्ते जिगीषुरित्यादावेव प्रत्ययसकारस्य षत्वं स्यात्। रामेषु इत्यादौ न स्यादत आदेशात्मकस्य प्रत्ययावयवस्य सकारस्य षकार इत्युच्यते। प्रत्ययावयवलक्षणास्वीकारे तु हलि सर्वेषाम् इति निर्देशः प्रमाणम्। सकारस्य मूर्धन्य इत्युक्ते आभ्यन्तरबाह्यसाम्यात् षकार एव भवति। रामे सु इत्यत्र सु इत्यस्य व्यपदेशिवद्भावेन सुबन्तत्वात्पदत्वे सात्पदाद्योरिति षत्वनिषेधः स्यात्खलु इति चेत् प्रत्ययग्रहणपरिभाषया सुबन्तत्वं न भवतीति भावः।

शासिवसीति सूत्रस्य इण्कवर्गाभ्यां परस्य शास्धातोः वस्धातोः घस्धातोः आदेशस्य वा सस्य षः स्यात् इत्यर्थः। उदाहरणम् – ऊषतुः। वस्धातोः लिटि प्रथमपुरुषद्विवचने इदं रूपम्। ऊस् अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे शासिवसीति प्रकृतसूत्रेण षत्वमुच्यते। तत ऊषतुसिति जाते रुत्वविसर्गयोः ऊषतुः इति रूपं सिध्यति। घसीतिशब्देन घस्लृ इत्यादेशोऽपि वर्तते लुङ्सनोर्घस्लृ इति विधीयमानः। घस्लृ अदने इति भौवादिको धातुरपि वर्तते।

स्तौतिण्योरेवेति सूत्रस्य अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य इत्यर्थः। तुष्टूषति। द्युतिस्वाप्योः इत्युत्वम्। सुष्वापयिषति। सिषाधयिषति। स्तौतिण्योः किम्? – सिसिक्षति। उपसर्गात्तु स्वादिष्वभ्यासेन च इति षत्वम्। परिषिषिक्षति।

सेवसित.. इत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्। प्राक्सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः।

निषिषेधेत्यादौ अभ्याससकारस्य उपसर्गात्सुनोतीत्यनेन षत्वे सिद्धे धातुसकारस्यादेशप्रत्यययोरिति च षत्वे सिद्धेऽभ्यासव्यवधानेऽपि षत्वं विधातुं किमर्थमिदं

सूत्रम् इति चेदुच्यते –

1.अभ्यासव्यवायेऽषोपदेशस्यापि षत्वं यथा स्यात्। यथा–अभिषेणयितुम् इच्छति अभिषिषेणयिषति।

2.अभ्यासावर्णात्परस्यापि यथा षत्वं स्यात्। यथा–अतितष्ठौ।

3.षत्वापन्ने सनि यथा स्यात्। यथा–अभिषिषिक्षति।

इत्येवं फलत्रयार्थमिदं सूत्रमवाचि। तत्रापि प्रथमवाक्यम्। द्वितीयवाक्यं तु नियमार्थम् । अभ्यासस्य यदि षत्वं चेदेषामेव न तु सुनोत्यादीनाम् इति भावः।

सदिरप्रतेरिति सूत्रस्य सदेः सकारस्य उपसर्गस्थान्निमित्तात् प्रतेरुत्तरस्य मूर्धन्य आदेशो भवति। निषीदति, विषीदति, न्यषीदत्, व्यषीदत्। निषसाद। विषसाद। अप्रतेरिति किम? प्रतिसीदति।

अवाच्चेति सूत्रस्य आलम्बने आविदूर्ये चार्थे विद्यमानस्य स्तन्भेस्सकारस्य षकारादेशो भवतीति अर्थः। उदाहरणम् – आलम्बने–अवष्टभ्य यष्टिं तिष्ठति इति। यष्टिमाश्रित्य तिष्ठतीत्यर्थः। आविदूर्यं नाम सामीप्यम्। अवष्टब्धा गौः। निरुद्धा सती समीपे आस्ते इत्यर्थः।

वेश्च स्वनेति सूत्रस्य वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्धन्यादेशो भवति इत्यर्थः। विष्वणति, व्यष्वणात्, विषष्वाण। अवष्वणति, अवाष्वणत्, अवषष्वाण। अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति। भोजन इति किम्? विस्वनति मृदङ्गः।

परिनिवीत्यस्य परि नि वि–इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव, सित, सय, सिवु, सह, सुट्, स्तु, स्वञ्ज–इत्येतेषां सकारस्य मूर्धन्य आदेशो भवति इत्यर्थः। परिषेवते, निषेवते, विषेवते, पर्यषेवत, न्यषेवत, व्यषेवत। परिषिषेविषते, निषिषेविषते। विषिषेविषते।

अनुविपरीति सूत्रस्य एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् इत्यर्थः। अनुष्यन्दते, अनुस्यन्दते वा जनम्। अप्राणिषु किम्? – अनुस्यन्दते हस्ती। अप्राणिषु इति पर्युदासात् मत्स्योदके अनुस्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिषु न इत्युक्तौ तु न स्यात्।

परिस्कन्देति सूत्रस्य प्राच्यभरतानां प्रयोगविषये परिस्कन्द इति निपात्यते षत्वाभावः इत्यर्थः। अन्येषां मते परेश्चेति सूत्रेण विकल्पेन षत्वं परिष्कन्दः, परिस्कन्द इति रूपमिति।

परेश्चेति सूत्रेण विकल्पे षत्वे सिद्धे तदभावोऽनेन निपात्यते इत्यर्थः।

स्फुरतिस्फुलत्योरित्यस्य निस्, नि, वि – एतेभ्य उपसर्गेभ्यः परयो स्फुरतिस्फुलत्योः सकारस्य षत्वं वा स्यात् इति सूत्रार्थः। निष्फुरतीति उदाहरणम्। वा शरीति विकल्पेन विसर्ग इति आशयः। केचन स्फुर इत्यस्य स्फर इति अकारोपधत्वमपि पठन्ति।

वेः स्कभ्नातरित्यस्य वेः परस्य स्कभ्नातेः सस्य षः स्यात् इत्यर्थः। विष्कभ्नोति, विष्कभ्नाति। अत्र स्कन्भ् धातुः विवक्षितः न तु श्नाविकरणविशिष्टः केवलं स्कभ्नातिः। स्कभ्नोतिरपीष्टः। तेन पूर्वोक्तं रूपद्वयं सिध्यति। विष्कभ्नोति इति श्नुविकरणविशिष्टः प्रयोगः। विष्कभ्नाति इति श्नाविकरणविशिष्टः प्रयोगः। उभयत्रापि अनेन सूत्रेण षत्वमुच्यते। नित्यग्रहणाद् विकल्पस्य निवृत्तिः ज्ञायते।

समासाङ्गुलेरित्यस्य अङ्गुलेः परस्य सङ्गशब्दस्य यः सकारः तस्य षः स्यात् इत्यर्थः। आदेः परस्येत्युक्तार्थलाभः□। सङ्ग इति प्रथमाषष्ठ्यर्थे अङ्गुलिषङ्गः। समासे किम्? अङ्गुलेः सङ्गः। अङ्गुलेः किम्? पाणिसङ्गः। सङ्गस्य किम्? अङ्गुलिसन्धिः। म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रज इत्यत्र सकारपाठश्चिन्त्य इति वामनः।

भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे। भीरुष्ठानम्। असमासे तु भीरोः स्थानम्। अग्निसोमौ माणवकौ इत्यत्र षत्वं न भवति गौणमुख्यपरिभाषया। अर्थाश्रये एतत्कार्यं प्रवर्तते। न तु शब्दाश्रये। गौस्तिष्ठति इति शब्दाश्रयकार्यमस्ति।

ज्योतिस्, आयुस् – इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्धन्यादेशो भवति समासे। ज्योतिष्टोमः, आयुष्टोमः। ज्योतिःष्टोम, आयुःष्टोमः। समासे इत्येव – ज्योतिः स्तोमं दर्शयति।

मातृपितृभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। असमासे तु मातुः स्वसा, पितुः स्वसा।

मातुः स्वसा इति विग्रहे समासे विभाषा स्वसृपत्योः इति सूत्रेण विकल्पेन अलुकि मातुःस्वसा इति षष्ठीसमासे प्रकृतसूत्रेण विकल्पेन षत्वे मातुःष्वसा तदभावे मातुस्वसा इति रूपद्वयं सिध्यति।

अभिनिसः स्तनः सस्य मूर्धन्यः। अभिनिष्टानो वर्णः। शब्दसंज्ञायां किम्? अभिनिःस्तनति मृदङ्गः।

उपसर्गेणः प्रादसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परः किम्? – अभिस्तः।

सुषुषुपतुरित्यत्र पूर्वं धातुरिति नियमेन द्वित्वात्प्रागेव परत्वात्सम्प्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुप् इत्यस्य कृतषत्वस्य द्वित्वे सति

खण्डद्वयेऽपि षकारश्रवणं निर्बाधमित्यर्थः। द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वात् कथं षत्वमिति चेत् पूर्वत्रासिद्धीयमद्विर्वचने इति परिभाषया सिध्यति।

परिस्थितिः इत्यादौ निमित्तसद्भावे उपसर्गादिति कुतो न षत्वमिति चेत् यत्क्रियायुक्ताः प्रादय तम्प्रत्येव गत्युपसर्गसंज्ञे भवत इति भाष्यात् परिगता स्थितिः परिस्थितिः इति स्थितेश्च गतिः पर्यचिन्ति। एवं च अपदान्तस्य मूर्धन्य इत्यधिकारे समागातानां सूत्राणां बाध्यबाधकावविचारो व्यधायि।

इत्थं च व्रश्चभ्रस्जेत्यिादिनियमेन विधीयमानं षत्वम्, इणः षः इत्यधिकारे विधीयमानं षत्वम्, अपदान्तस्य मूर्धन्यः इत्यधिकारे विधीयमानं षत्वम्, ष्टुना ष्टुः इति सूत्रेण विधीयमानं षत्वम् इति प्राधान्येन चतुष्प्रकारकं षत्वम् अष्टाध्याय्याम् प्रोक्तम्। तेषां सप्रमाणं निरूपणं विधाय बाध्यबाधकभावविचारः अक्रियत। प्रथमाध्याये प्रस्तावनादिकं द्वितीयाध्याये व्रश्चभ्रस्जेत्यादिसूत्रविचारः तृतीयाध्याये मूर्धन्याधिकारविचारः चतुर्थाध्याये उपसंहारः निष्कर्षश्च प्रत्यपादि।

**निष्कर्षः** –

1. प्रकृताध्ययनेन हरिष्काम्यतीत्यादौ षत्वं भवति हरिः फलतीत्यादौ षत्वं नेति सिध्यति।
2. उपसर्गात्परेषां सुनोत्यादीनां सस्य मूर्धन्यो भवति। परन्तु स्तुस्वञ्जोः अड्व्यवायेऽपि केवलं परिनिविभ्यः परयोः वा षत्वं भवति। अन्येभ्योऽड्व्यवाये न।
3. सेवादीनां त्रयाणां सस्य परिनिविभ्यः परेषामेव षत्वम्।
4. अवेत्युपसर्गस्येणन्तत्वं नास्ति चेदपि स्तम्भेः स्वनश्च आलम्बनाद्यर्थे सस्य षत्वम्।
5. स्थादिष्विति सूत्रेण अभ्यासावर्णात्परस्यापि षत्वं भवति। यथा–अतितष्ठौ।
6. भ्रातृष्पुत्रशब्दपाठात् मातुः करोतीत्यादौ न षत्वम्।
7. कस्कादिगणे सर्पिष्कुण्डिकाशब्दपाठेनासामासे व्यपेक्षाविरहेऽपि षत्वं व्यपेक्षायां नित्यं च षत्वं भवतीति निष्कर्षः।

## अनुशीलितग्रन्थाः


1. अष्टाध्यायी – पाणिनिः, कृष्णदास अकादमी, वाराणसी –1985
2. महाभाष्यम् – पतञ्जलिः, सम्पादकः–श्रीगुरुप्रसादशास्त्री,राष्ट्रियसंस्कृतसंस्थानम्–दिल्ली – 2006
3. लघुसिद्वान्तकौमुदी – पं. नारायणदत्त त्रिपाठी,, गीताप्रेस्, गोरखपुर 2004
4. निरुक्तम् – स्वमी दयानन्दसरस्वती, परोपकारिणी सभा, अजमेर.
5. संस्कृत व्याकरणशास्त्र का इतिहास – पं युधिष्ठिर मीमांसकः, रामलाल कपुर ट्रस्ट, बहालगढ – 1996
6. वैयाकरणसिद्वान्तकौमुदी– भट्टोजी दीक्षितः, चौखम्बासंस्कृतग्रन्थमाला, वाराणसी, 1996
7. तैत्तरीयोपनिषद् – के. एल जोशी चौखम्बा पब्लिशर्स्, वाराणसी, 2004
8. अमरकोशः – अमर सिंह , राष्ट्रियसंस्कृतसंस्थान, दिल्ली, 2001
9. भट्टिकाव्यम् – शेषराज शर्मा, चौखम्बा संस्कृत सीरीज आफिस , वाराणसी, 2001
9. वाक्यपदीयम् – पं. रामप्रसाद त्रिपाठी, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, 2001
10. पराशर उपपुराणम् – कपिलदेव त्रिपाठी, सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी,1990
11. प्रक्रियाकौमुदी – पं.मुरलीधरमिश्रः,सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी,2000
12. वैयाकरणभूषणसारः – कौण्डभट्टः , निर्णयसागरप्रेस , मुम्बई,1995
13. वैयाकरणसिद्धान्तकौमुदी – हिन्दीव्याख्याकारः डॉ. उमेशचन्द्र पाण्डेयः, चौखम्बा विद्याभवन, वाराणसी, सप्तमसंस्करणम्–2006
14. प्रत्ययकोशः – स्व.श्री.गुण्डे राव हरकरे, संस्कृतविभागः,ओस्मानिया विश्वविद्यालयः,हैदराबाद–1983
15. लघुशब्देन्दुशेखरः – नागेशभट्टः, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, 2001
16. प्रौढमनोरमा – भट्टोजिदीक्षितः, चौखम्बा अमरभारती प्रकाशन, वाराणसी,1983
17. व्याकरणशास्त्रेतिहासः – लोकमणिदाहालः, भारतीयविद्याप्रकाशन, वाराणसी,2007


इतोऽपि व्याकरणसिद्धान्तसुधानिध्यादयो ग्रन्था अवालोक्यन्त।

# परिशिष्टम्

## षत्वविधायकसूत्राणां कोष्टकम्

| अ. क्र. | कौमुदी संख्या | सूत्रम् | अष्टाध्यायीसंख्या | वृत्तिः | उदाहरणम् |
|---|---|---|---|---|---|
| 1. | 294 | व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। | (8–3–36) | व्रश्चादीनां सप्तानां छशान्तयोः च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। | निङ्भ्याम्। |
| 2. | 153 | इणः षः। | (8–3–39) | इणः परस्य विसर्गस्य षकारः स्यात् पूर्वविषये। | सर्पिष्पाशम् |
| 3. | 155. | इदुदुधस्य चाऽप्रत्ययस्य। | (8–3–41) | इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः परयोः। | निष्प्रत्यूहम् |
| 4. | 157. | द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। | (8–3–43) | कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः परयोः। | द्विष्करोति / द्विः करोति |
| 5. | 158. | इसुसोः सामर्थ्ये। | (8–3–44) | इसुसोर्विसर्गस्य षः स्याद्वा कुप्वोः। | सर्पिष्करोति / सर्पिः करोति |
| 6. | 159. | नित्यं समासेऽनुत्तरपदस्थस्य। | (8–3–45) | इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं ष स्यात्कुप्वोः परयोः। | सर्पिष्कुण्डिका |
| 7. | 144. | कस्कादिषु च। | (8–3–48) | एष्विण उत्तरस्य विसर्गस्य षः स्यात्। अन्यस्य तु सः। | कस्कः। सर्पिष्कुण्डिका |
| 8. | 210. | अपदान्तस्य मूर्धन्यः। | (8–3–55) | आपादपरिसमाप्तेरधिकारोऽयम्। | ..... |
| 9. | 211. | इण्कोः। | (8–3–57) | इत्यधिकृत्य। | ...... |
| 10. | 434. | नुम्विसर्जनीयशर्व्यवायेऽपि । | (8–3–58) | एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। | पिपठीष्षु / पिपठीःषु |
| 11. | 212. | आदेशप्रत्यययोः। | (8–3–59) | इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्। | रामेषु |
| 12 | 2410. | शासिवसिघसीनां च। | (8–3–60) | इण्कुभ्यां परस्यैषां सस्य षः स्यात्। | ऊषतुः |
| 13. | 2627. | स्तौतिण्योरेव षण्यभ्यासात्। | (8–3–61) | अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य। | तुष्टूषति |
| 14. | 2276. | प्राक्सितादड्व्यवायेऽपि। | (8–3–63) | सेवसित.. इत्यत्र सितशब्दात् प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। | न्यषेधत्। |
| 15. | 2277. | स्थादिष्वभ्यासेन चाभ्यासस्य। | (8–3–64) | प्राक्सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। | निषिषेध |
| 16. | 2270. | उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तो–भतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । | 8–3–65) | उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात्। | अभिषुणोति |
| 17. | 2271. | सरिदरप्रतेः। | (8–3–66) | प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात्। | निषीदति |

| | | | | | |
|---|---|---|---|---|---|
| 18. | 2272. | स्तन्भेः। | (8–3–67) | सौत्रस्य सस्य षः स्यात् | प्रतिष्टम्भः |
| 19. | 2273. | अवाच्चालम्बनाविदूर्ययोः। | (8–3–68) | अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात्। | अवष्टभ्य |
| 20. | 2274. | वेश्च स्वनो भोजने। | (8–3–69) | व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने। | विष्वणति |
| 21. | 2275. | परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तु स्वञ्जाम्। | (8–3–70) | परिनिविभ्यः परेषामेषां सस्य षः स्यात्। | निषेधति |
| 22. | 2359. | सिवादीनां वाड्व्यवायेऽपि। | (8–3–71) | परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। | पर्यषहत/ पर्यसहत। |
| 23. | 2349. | अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। | (8–3–72) | एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात्। | अनुष्यन्दते/ अनुस्यन्दते |
| 24. | 2398. | वेः स्कन्देरनिष्ठायाम्। | (8–3–73) | षत्वं वा स्यात्। | विष्कन्ता/ विस्कन्ता |
| 25. | 2399. | परेश्च। | (8–3–74) | अस्मात्परस्य स्कन्देः सस्य षो वा। | परिष्कन्दति/ परिस्कन्दति। |
| 26. | 3026. | परिस्कन्दः प्राच्यभरतेषु। | (8–3–75) | पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। | परिस्कन्दः |
| 27. | 2537. | स्फुरतिस्फुलत्योर्निर्निविभ्यः। | (8–3–76) | षत्वं वा स्यात्। | निष्फुरति/ निस्फुरति |
| 28. | 2556. | वेः स्कभ्नातेर्नित्यम्। | (8–3–77) | वेः परस्य स्कभ्नातेः सस्य षः स्यात्। | विष्कभ्नोति/ विष्कभ्नाति |
| 29. | 1019. | समासाङ्गुलेः सङ्गः। | (8–3–80) | अङ्गुलिशब्दात्सस्य मूर्धन्यः स्यात्समासे। | अङ्गुलिषङ्गः |
| 30. | 1020. | भीरोः स्थानम्। | (8–3–81) | भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे। | भीरुष्ठानम् |
| 31. | 924. | अग्नेः स्तुत्स्तोमसोमाः। | (8–3–82) | अग्नेः परेषामेषां सस्य षः स्यात्समासे। | अग्निष्टुत् |
| 32. | 1021. | ज्योतिरायुषः स्तोमः। | (8–3–83) | आभ्यां स्तोमस्य सस्य मूर्धन्यः समासे। | ज्योतिष्टोमः |
| 33. | 984. | मातृपितृभ्यां स्वसा। | (8–3–84) | आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। | मातृष्वसा/ पितृष्वसा |
| 34. | 983. | मातुः पितुर्भ्यामन्यतरस्याम्। | (8–3–85) | आभ्यां स्वसुः सस्य षो वा स्यात्समासे। | मातुःष्वसा/ मातुःस्वसा |
| 35. | 3193. | अभिनिसः स्तनः शब्दसंज्ञायाम्। | (8–3–86) | अस्मात्स्तनः सस्य मूर्धन्यः। | अभिनिष्टानः |
| 36. | 2472. | उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। | (8–3–87) | उपसर्गेणः प्रादसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे। | निष्यात् |
| 37. | 2477. | सुविनिर्दुर्भ्यः सुपिसूतिसमाः। | (8–3–88) | एभ्यः सुप्यादेः सस्य षः स्यात् | सुषुषुपतुः |
| 38. | 3082. | निनदीभ्यां स्नातेः कौशले। | (8–3–89) | आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये। | निष्णातः |
| 39 | 3083. | सूत्रं प्रतिष्णातम्। | (8–3–90) | प्रतेः स्नातेः षत्वम्। | प्रतिष्णाम् |
| 40. | 3084. | कपिष्ठलो गोत्रे। | (8–3–91) | कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः। | कपिष्ठलो |
| 41. | 2917. | प्रष्ठोऽग्रगामिनी। | (8–3–92) | प्रतिष्ठत इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः | प्रष्ठः |

| | | | | | |
|---|---|---|---|---|---|
| 42. | 3233. | वृक्षासनयोर्विष्टरः। | (8–3–93) | अनयोर्विपूर्वस्य स्त्रः षत्वं निपात्यते। | विष्टरः |
| 43. | 3206. | छन्दोनाम्नि च। | (8–3–94) | विपूर्वस्य स्तृणातेः घञन्तस्य सस्य षत्वं स्यात् छन्दोनाम्नि। | विष्टरः |
| 44. | 969. | गवियुधिभ्यां स्थिरः। | (8–3–95) | आभ्यां स्थिरस्य सस्य षः स्यात्। | गविष्ठिरः |
| 45. | 3085. | विकुशमिपरिभ्यः स्थलम्। | (8–3–96) | एभ्यः स्थलस्य सस्य षः स्यात्। | विष्ठलम् |
| 46. | 2918. | अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः। | (8–3–97) | एभ्यः स्थस्य सस्य षः स्यात्। | द्विष्ठः |
| 47. | 1024. | सुषामादिषु च। | (8–3–98) | सस्य मूर्धन्यः। | सुषामा |
| 48. | 1025. | एतिसंज्ञायामगात्। | (8–3–99) | सस्य मूर्धन्यः। | हरिषेणः |
| 49. | 1027. | नक्षत्राद्वा। | (8–3–100) | एति सस्य संज्ञायामगकारात् मूर्धन्यो वा। | रोहिणीषेणः / रोहिणीषेनः |
| 50. | 1327. | ह्रस्वात्तादौ तद्धिते। | (8–3–101) | ह्रस्वादिणः परस्य सस्य षः स्मात्तादौ तद्धिते। | निष्ट्वः |
| 51. | 2403. | निसस्तपतावनासेवने। | (8–3–102) | षः स्यात्। | निष्टपति |
| 52. | 3640. | युष्मत्तत्ततक्षुष्वन्तःपादम्। | (8–3–103) | पादमध्यस्थस्य सस्य मूर्धन्यः स्यात् तकारादिषु परेषु। | तेभिष्ट्वा |
| 53. | 3642. | स्तुतस्तोमयोश्छन्दसि। | (8–3–105) | एतयोः परतः सस्य षत्वं स्यात्। | नृभिष्टुतस्य |
| 54. | 3643. | पूर्वपदात्। | (8–3–106) | पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा स्यात्। | दिविष्ठः |
| 55. | 3644. | सुञः। | (8–3–107) | पूर्वपदस्थान्निमित्तात्परस्य सूञो निपातस्य सस्य षः। | अभीषुणः। |
| 56. | 3645. | सनोतेरनः। | (8–3–108) | अनकारान्तसनोतेरिण्कुभ्यां परस्य सस्य षश्छन्दसि। | गीषा |
| 57. | 3646. | सहेः पृतनर्ताभ्यां च। | (8–3–109) | पृतनर्ताभ्यां परस्य सहेः सस्य षः स्यात्। | पृतनाषाहम् |
| 58. | 113. | ष्टुना ष्टुः। | (8–4–41) | स्तोः ष्टुना योगे ष्टुः स्यात्। | रामष्षष्ठः |

.......................